ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २०१७ ई०

प्रधानसम्पादकः

प्रो० रमेशकुमारपाण्डेयः

कुलपतिः

सम्पादकः

डॉ० शिवशङ्करमिश्रः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

## (A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २०१७ ई०

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**डॉ० शिवशङ्करमिश्रः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

४२ वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) २०१७ ई०



मुद्रकः - **अमरप्रिंटिंगप्रैसः**, दिल्ली

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**डॉ० शिवशङ्करमिश्रः**

**सम्पादकमण्डलम्**

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

प्रो० भागीरथिनन्दः

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

"वेदाभ्यासादजस्रमजरा च ज्योतिरुत्पद्यते" इत्याप्तोक्तमभिलक्ष्य नूनमेव सतां दृढावलम्बः संस्कृतवाङ्मयस्याध्ययनेन सुस्थिरो भवति। यतः स्वाध्यायोऽध्येतव्यश्च इत्युपक्रमात् अधिपूर्वकेङ् धातोः न केवलं कण्ठव्यापारार्थ अपितु ज्ञानपूर्वकपारायणमेवार्थः परिचीयते। अत एव मासमधीतो नायात इत्यादिवाक्यानां सङ्गतिर्जायते। पारायणमात्रोपक्रमे फलप्राप्तेः धात्वर्थाभावात् अपवर्गव्यतिरेकस्य प्रतिपादनमसम्भवि स्यात्। तस्मात् अर्थज्ञानपूर्वकशब्दराशेः ज्ञानमेव स्वाध्यायविषयत्वमुपैति। सा च अध्ययनपरम्परा आनुपूर्वीमतो वेदस्य अर्थद्वारैव ग्रहणात् अदृष्टोत्पादने प्रकल्पिता भवति। भगवतो वेदस्य समुचितस्वरूपोपसम्भृतशब्दराशेः सम्यग् उच्चारणे शिक्षादीनां भवतु प्रकामं फलं तथापि अर्थज्ञानं तु व्याकरणाद्यङ्गद्वारैव नान्यथावलम्बेन इति सुस्पष्टं प्रतिभाति। तत्र व्याकरणं मुखं रक्षकञ्चेति परिगीतं नैकत्र। तथैव मिथ्याप्रयुक्तिराहित्यं शिक्षायाः, वेदविहितप्रयोगपरिज्ञानं कल्पस्य, निर्वचनं निरुक्तस्य, विनियोगादिविधेः याथार्थ्यावगतिः छन्दसां, सर्वत्रापि समुचितकालपरिज्ञानं ज्योतिषशास्त्रस्य नियतफलं धर्मवत् सङ्केतितं विविधागमशास्त्रकदम्बैः। तस्मात् सर्वत्रापि सुस्फीतं निर्भ्रान्तं च ज्ञानं ब्राह्मणस्यापरिहार्यमिति कश्चिच्छास्त्रीयः सिद्धान्तः पर्यवस्यति। एतदर्थमासीत् काचिद् गुरुपरम्परोपलब्धसंस्काराधाननैपुण्यवहा आनुश्रविकी प्रशस्ता परम्परा परमद्यत्वे सा न सम्भवति कालप्रभावात्। अतोऽद्यापि सुकुमारमतीनां काव्यफलमिवात्रापि समग्रशास्त्रोपालम्भे प्रकल्पितर्जुतरोपायेषु कश्चिदभिनव उपायः स्यादेव तदर्थमबाधितोपायः प्रकाशनोपक्रमः।

अद्यत्वे त्विदं प्रकाशनं कर्म पदोन्नत्यादिष्वत्यावश्यकतया अपरिहार्यतां गतम्। अत एतद्दिशि विद्यापीठद्वारा पत्रिकेयं प्रकाशपथमानीयत इति प्रमोदावहम्। एतच्छोधपत्रिकाप्रकाशनं विदुषामनुसन्धित्सूनां छात्राणाञ्च महोपकाराय कल्पयिष्यत इति मे द्रढीयान् विश्वासः।

**प्रो. रमेशकुमारपाण्डेयः**

**कुलपतिः**

## सम्पादकीयम्

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभेयें त्रैमासिकी शोधपत्रिका संस्कृतवाङ्मयमवलम्ब्य नैकविषयं क्रोडीकृत्य निरन्तरं प्रकाश्यमाना विद्योतते। अत्र संस्कृत-हिन्दी-ऑग्लभाषायामुत्कृष्टाः विविधविषयगवेषणान्विताः नूतनज्ञानविभूषिताः शोधनिबन्धाः संगृह्यन्ते। संस्कृतस्यानुसन्धानक्षेत्रे विविधेषु विश्वविद्यालयेषु शिक्षणसंस्थानेषु च ज्ञानविज्ञानविवेचनतत्पराणामाचार्याणां विदुषाञ्च प्रस्तुतं बौद्धिकं प्रातिभोपस्थापने योगदानं नूनमेतस्याः वैशिष्ट्यं जनयति।

सम्प्रति संस्कृतग्रन्थेषु पाण्डुलिपिषु चानुद्घाटितं यद् विशिष्टं ज्ञानविज्ञानं तस्योद्घाटनं प्रकाशनञ्च भारतीयसमाजाय, संस्कृतिसंरक्षणाय, संस्कृतस्य वैभववर्धनाय च नितान्तमपेक्षितम्। यज्ज्ञानं जीवने सुखसाधनं सम्पादयति, येन मनुष्याणां विद्यमानानां शारीरिक-मानसिक-सामाजिक-धार्मिक-आर्थिक-आध्यात्मिक-बहुविधसमस्यानां पुरोवर्ति समाधानं भवति, येन च जीवनपथे सुखशान्तिरवतरति तादृशं संस्कृतभाषायां निश्चयेन विद्यमानं विशिष्टं ज्ञानं सम्यग् सुधीभिः सततं समुद्घाटनीयम्।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के विविधविषयविश्लेषणपराः त्रयोदशशोधनिबन्धाः संगृहीताः सन्ति। विद्यालंकारविभूषितैः विद्वद्भिः अनुसन्धानपद्धत्या तत्तद्विषयमधिकृत्य समीचीनं विश्लेषणं विहितम्। अनुसंधानकार्ये प्रवृत्तानामाचार्याणामनुसन्धातृणाञ्च कृते संस्कृतज्ञानसौरभं वितन्वतीयं महदुपकारिका भविष्यतीति कामयमानोऽहं प्रमादादज्ञानाद्वा समुत्पन्नस्य दोषव्यूहस्य विच्छेदपूर्वकं निर्देशोपदेशादिभिरुद्बोधनार्थम् उत्साहसम्वर्धनार्थञ्च प्रार्थ्यन्ते सुमनसः मनीषिणः।

**डॉ. शिवशङ्करमिश्रः**
सहाचार्यः
शोधप्रकाशनविभागस्य

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

# पुराणेषु निःश्रेयसतत्त्वम्

डॉ.शिवशङ्करमिश्रः

भारतीयसंस्कृतेर्मूलाधाराः भवन्ति वेदाः। यतः वेदानामक्षुणा विचारसरणिरेव भारतीयसंस्कृति-माध्यमेन निरन्तरं प्रवहमाना भवति। वेदास्तावत् भ्रमप्रमादविप्रलिप्साकर्णापाटवादि पुन्दोषशङ्काकल-ङ्कपङ्करहितत्वेन अपौरुषेया अनादयो नित्याश्च। अतएव निगद्यते-**वेदोऽखिलो धर्ममूलम्।**[1]

वेदेषु ये विषयाः गूढतया सूत्ररूपेण निर्दिष्टाः तेषामेव विस्तारः पुराणेषु प्रदर्शितः। अतएवोच्यते-**इतिहासपुराणाभ्यां वेदं समुपवृंहयेत्। विभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति।**[2]

पुराणस्य क्षेत्रमत्यन्तं विस्तृतमस्ति। याज्ञवलक्यस्मृतौ चतुर्दशविद्यानां गणनाप्रसंगेऽपि पुराणस्य प्रवेशः-

**पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्वानानि विद्यानां धर्मस्य च चतुर्दश॥**
**अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।**
**धर्मशास्त्रं पुराणं च विद्याश्चैताश्चतुर्दश॥**[3]

स्कन्दपुराणस्य एकस्मिन् प्रसङ्गे प्रतिपादितमस्ति यद्यथा वेदाः ब्रह्मणः मुखान्निर्गताः तथैव पुराणान्यपि ब्रह्मणो वक्त्राद्विनिर्गतानि तदुक्तम्-

**यदा तपश्चचारोग्रममराणां पितामहः।**
**आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः॥**
**ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम्।**
**नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम्॥**
**निर्गतं ब्रह्मणो वक्त्रात्............**[4]

श्रीमद्भागवतेऽपि अयमेव भाव एवं प्रकटितः-

**इतिहासपुराणानि पञ्चमं वेदमीश्वरः।**
**सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः॥**[5]

1. मनुस्मृतिः 2/6
2. म.भा.आ.प. 1/267
3. याज्ञवल्क्य स्मृतिः 1/3
4. स्क.पु.प्र.ख. 6/21.22
5. श्रीमद्भागवतम् 3/12/39

एतेषां सुप्रसिद्धानामष्टादशपुराणानां संस्कृतवाङ्मये विद्यते श्लाघ्यतमं स्थानम्। प्रायः समेषां भारतीयानां जीवनपद्धतौ पुराणानां विशिष्टं योगदानं वरीवर्तते। अत्र विशेषेणेदं चिन्त्यं यन्मुक्तिलाभे एतेषां कथमुपयोगः? पुराणानां मुक्तिप्रयोजकत्वं कथम्? अत्र मुक्तेः कि कारणं किञ्च करणमिति सर्वं विवेचनीयम्। कस्मिन्–कस्मिन् पुराणे मोक्षलाभाय किं किं वर्णितमिति सर्वप्रथममत्र विविच्यते–

**विष्णुपुराणम्**

विष्णुपुराणमष्टादशपुराणान्तर्गतं सर्वप्राचीनञ्च विद्यते। अत्र शाश्वतब्रह्मणि लय एवात्यन्तिकविमुक्तिरिति प्रतिपादितः।[1] अस्य पुराणस्य पञ्चमाध्याये विमुक्तेः कारणं करणञ्च किमिति निरूपणावसरे ज्ञानस्य जीवस्य चोल्लेखः दरीदृश्यते। मुक्ते सति जीवः कृतकृत्यो भवति, अत्र कृतकृत्यो नाम चेष्टानिवृत्तिरिति तत्रैव वर्णितम्।[2] मुक्तेरवस्थावर्णनप्रसंगे जीवात्मपरमात्मनोऽभिन्नता बोध एवाद्वैतवेदान्तस्य मुक्तिरिति निगदितम्।[3] यदा जीवात्मपरमात्मनोर्भेदबुद्धिर्विनाशः तथा अद्वैतज्ञानोत्पत्तिः। एतस्य फलमिदं यत् भेदज्ञानमज्ञानपूर्वकमभेदज्ञानन्तु वास्तविकं यथार्थज्ञानं वा, इदमेव ज्ञानं मुक्तिपदेन व्यपदिश्यते।[4] अभेदात्मबोध एव ब्रह्मज्ञानमिति। ब्रह्मज्ञाने जाते निखिलमपि भेदज्ञानं तिरोहितं भवति, तथा च तदानीं वाङ्मनसागोचरस्वयंवेद्यज्ञानस्योदयो भवति।[5] शाश्वतलयोऽपि मुक्तिरित्युक्तम्, शाश्वतलयरूपामुक्तिरेव ब्राह्मीस्थितिः,[6] एतद् ब्राह्मीस्थितिलाभे संसारगतिः सर्वथा निरुद्ध्यते। विषयविषयिण्योः परस्परव्यवहार एव जगदिति कथ्यते। एतस्य जगद्व्यवहारस्य अध्यासे निवृत्ते सुतरां निवृत्तिः सञ्जायते। यदा मनः पूर्णरूपेण निर्विषयं भवति तदा विषयिणः विषयस्य च परस्परमध्यासः निवर्तते। मनसः नाशः तस्य निर्विषयत्वं वा ऐक्यमेव। मुक्तावस्थायां मनसो विनाशो अतएव तदानीं मनसि नहि कश्चन विषयो भासते, मन एव बन्धनस्य मोक्षस्य च कारणम्।[7] विषयी बद्धो भवति निर्विषयी च मुक्तो भवति।[8] मुक्तपुरुषः पूर्णात्माद्वैतबोधमाप्नोति अतएव सः तत्त्वदर्शिपदेन वाच्यत्वं लभते। द्वैतबोध स्य निरसने सत्येव तत्त्वबोधः उत्पद्यते नान्यथा।[9]

आत्मज्ञपुरुषः सर्वभूतात्मबोधयुक्तो भवति।[10] मुक्तिकारणं यत्परमं ज्ञानं तदेकमद्वितीयं परमशुद्धं

1. इत्येष कथितः सम्यक् तृतीयः प्रतिसञ्चरः। आत्यन्तिको विमुक्तिर्या लयो ब्रह्मणि शाश्वते। (वि.पु. 6/8/1)
2. वि.पु. 6/7/92
3. वि.पु. 6/7/93
4. वि.पु. 6/7/94
5. वि.पु. 6/7/53
6. योगस्वरूपं खाण्डिक्य श्रूयतां गदतो मम।
   यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ।। वि.पु. 6/7/27
7. मन एवं मनुष्याणां कारणं बन्धमोक्षयोः।
   बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः। वि.पु. 6/4/28
8. विषयेभ्यः समाहृत्य विज्ञानात्ममनो मुनिः।
   चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परमेश्वरम् ।। वि.पु. 6/4/29
9. ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्।
   एकं सदैकं परमः परेशः न वासुदेवो न यतोऽन्यदस्ति।। वि.पु. 2/12/42–43
10. आत्माधिगताज्ञानो देवादीनि महामुने।
    सर्वभूतान्यभेदेन स ददर्श तदात्मनः।। वि.पु. 2/13/38

सत्त्वपदेन उच्यते।[1] जगज्जीवेश्वरावप्येक एव। अत्र मोक्षावस्था अनिर्वचनीया कार्यकारणातीता भवति। यो विष्णुः स एव विष्णोः परं पदं, स शुद्धः अभयः सर्वभेदविवर्जितः, सर्वद्वन्द्वतिरोहितः अवाङ्मनसगोचरः स्वयंवेद्यः सच्चिदानन्दस्वरूपोऽस्ति।[2] पुराणेऽस्मिन् बहुधा जीवजगतोः परमतत्त्वाभिन्नत्वं प्रतिपादितम्। ज्ञानस्य चरमावस्थायां जीवः सर्वदुःखाद्विमुक्तिं लभते।

उपर्युक्तवचनेनेदं निर्णीतं भवति यद्विष्णुपुराणे अद्वैतात्मबोधः, परमज्ञानं वा मोक्षः, परञ्च रामानुजाचार्येण विष्णुपुराणस्य अद्वैतसिद्धान्तानुगतत्वं खण्डितम्। तेनोक्तं यज्जीवः ब्रह्मणो भिन्नः, मुक्तावस्थायामपि तयोर्भेदः, अतो येन जीवात्मपरमात्मनोरैक्यं प्रतिपाद्यते तन्न युक्तियुक्तम्, एकपदार्थाऽपरपदार्थयोरैक्याऽभावात्।[3] जीवब्रह्मणोः भेदप्रदर्शनार्थं बहवः श्लोकाः विष्णुपुराणे उद्धृतास्सन्ति।

**शिवपुराणम्**

**बन्धं मोक्षं तथोपायं वक्ष्येऽहं शृणुतादरात्।**
**प्रकृत्याद्यष्टबंधेन बद्धो जीवः स उच्यते।।**
**प्रकृत्याद्यष्टबंधेन निर्मुक्तो मुक्त उच्यते।**
**प्रकृत्यादिवशीकरो मोक्ष इत्युच्यते स्वतः।।**
**बद्धजीवस्तु निर्मुक्तो मुक्तजीवः स कथ्यते।[4]**

ज्ञाता-ज्ञान-ज्ञेय एतत्त्रिविधात्मकं यज्जगत् तत्सर्वं शिवस्वरूपम्। ब्रह्मादितः आरभ्य जडप्रपञ्चपर्यन्तं यद्दरीदृश्यते तत्सर्वं शिवस्वरूपम्।[5] जीवः यदा अहं कर्ताऽस्मि इत्याकारिकयाहमात्मिकया बुद्ध्या निवृत्तो भवति तदा सः शिवस्वरूपतां लभते,[6] यथा स्वर्णमुद्रा ताम्रकॉचप्रभृतिन्यूनमुद्रया सह संयुक्ता न्यूनमूल्यतां प्राप्नोति तथा जीवोऽपि अहंकारसंयुक्ते सति बद्धः सञ्जायते, पुनश्च यथा सैव स्वर्ण मुद्रा ताम्रप्रभृतिन्यूनमुद्रया असंयुक्ता सति पूर्वातिमूल्यतां लभते तथा जीवोऽपि अहंकारमुक्तेन शिवस्वरूपलाभं कुरुते।[7] जीवस्याज्ञाननिवृत्तिपूर्वकज्ञानप्राप्त्यनन्तरं शिवस्वरूपलाभः, यथा दर्पणे स्वस्वरूपमेव द्रष्टुं शक्यते तथैव शिवमपि, यो सर्वव्यापिरूपेण दृश्यते स जीवन्मुक्तः सन् देहपाते शिवे लयं प्राप्नोति।[8] ज्ञानिनःशुभलाभे हर्षं नानुभवन्ति न वाऽशुभप्राप्ते दुःखम् यतस्ते तु सुखदुःखसमाः। एतादृशाः ज्ञानिनः आत्मयोगेन तत्त्वं विचारयन्तः यथेष्टं विचरन्ति। यदा जीवः शिवे लीयते तदा शरीररूपं यद्बन्धनं तच्छिद्यते, पुनर्जन्मग्रहणमपि नोपपद्यते।[9]

---

1. वि.पु. 2/12/43-44
2. अयं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम्।
   ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगता भवन्ति।। वि.पु. 1/22/85
3. वि.पु. 2/14/27
4. ज्ञाता ज्ञानं तथा ज्ञेयं सर्वं शिवमिदं जगत्। शि.पु. 1/78/2
5. वि.पु. 1/78/3
6. अहंकारतया जीवस्तन्मुक्तेः शंकरस्वयम्। शि.पु. 1/78/20
7. शि.पु. 1/78/21-22
8. शि.पु. 1/78/26-27
9. शि.पु. 1/78/28-29

शिवपुराणे मुक्तिर्द्विविधा जीवन्मुक्तिः विदेहमुक्तिश्च। जीवन्मुक्तजनानामिह जगति किमपि कर्तव्यं न भवति ते कर्मणा न बद्धयन्ते। तेषां विधेरविधाने निषेधस्यानिषेधे च न भवति कश्चन दोषः यथा जलस्थितं पङ्कजं जले निवसदपि न तेन लिप्यते तथा ज्ञानिनोऽपि ग्रहे निवसन्तोऽपि न कर्मणि लिप्यन्ते। विहितकर्मणामकरणे अविहितकर्मकरणे च जीवन्मुक्तजनानां किमपि पातकं न भवति।[1] पुराणेऽस्मिन् मुक्तजीवानां व्यक्तित्वलोपो भवतीत्यपि प्रतिपादितम्, यथा सर्वाः नद्यः स्वस्वक्षेत्रं परित्यज्य समुद्राभिमुखीभवन्ति अर्थात् सागरेण सह एकतामाप्नुवन्ति तथा मुक्तपुरुषोऽपि पित्रादि सर्वान् लोकान् परित्यज्य मुक्तिं सम्प्राप्य शिवस्वरूपं लभते।[2] उदाहरणेनानेनेदमपि सुस्पष्टं यद्यथा सरित्समुद्रयोः संयुक्ते उभयोर्जलमध्ये सर्वथा ऐक्यं तथा शिवे लयं सम्प्राप्तपुरुषस्य शिवस्य च मध्ये ऐक्यानुभूतिः। मुक्तजीवः सर्वज्ञत्वादिकमैश्वर्यं शिवसायुज्यञ्च प्राप्नोति। शिवपुराणे शिवतत्त्वं ब्रह्मतत्त्वञ्चैकमिति प्रतिपादितम्।

## अग्निपुराणम्

यो जीवः ब्रह्मभावनद्वारा शुद्धो भवति स समस्तजगज्ज्ञानं विनाश्य ब्रह्मत्वं सम्प्राप्नोति-**शुद्धभावश्च ब्रह्माण्डं भित्वा ब्रह्म भवेन्नरः** इति। अस्मिन् पुराणे इदमपि प्रतिपादितं यन्मुक्तजीवः अस्मिन् जगति पुनः नोत्पद्यते। यथा पात्रस्थितस्य जलस्य पात्रान्तरस्थेन जलेन सह सम्मेलनेन एकं जलमिति प्रतीतिः तथैव जोवोऽपि मुक्तौ शिवेन सहाऽभेदं सम्प्राप्य शिवत्वं भजते।[3] अयं मुक्तजीवः अज्ञानात् अज्ञानकार्याद्वा सर्वथा विमुच्यत इति।[4]

## कूर्मपुराणम्

मुक्तावस्थायां जीवो ब्रह्मभवतीति कूर्मपुराणस्य प्रवचनम्।[5] **''एकीभूतः परेणासौ तद्भवति केवलः''** अर्थात् ब्रह्मणा सह ऐक्यानुभूतिरेव जीवस्य केवलत्वमिति।[6] क्षेमप्राप्तिरपि मुक्तिरिति कूर्मपुराणे,[7] मुक्तजीवस्य व्यक्तित्वलोपोऽपि कूर्मपुराणानुमतं विद्यते।

## वायुपुराणम्

वायुपुराणे मुक्तेः त्रैविध्यं प्रतिपादितम्। ज्ञानप्रभावेण विषयवियोगजनिता मुक्तिः प्रथमा। रागक्षयहेतुजन्य केवलं निरञ्जनत्वं एवं तत्तत् निमित्तशुद्धत्वं निष्क्रियत्वं च यदुत्पद्यते तदेव द्वितीया मुक्तिः। एवमेव तृष्णाक्षयहेतुर्यो मोक्ष स तृतीयो मुक्तिभेदः।

ब्रह्मवैवर्तपुराणेऽपि मुक्तेः त्रैविध्यं प्रतिपादितम्,

---

1. शि.पु. 1/26/20-21
2. शि.पु. 3/12/130 शिवोभवेद् यतिः।
3. अग्नि पु. 311/25
4. अग्नि पु. 382/36
5. कूर्म पु. 2/31
6. कूर्म पु. 2/32
7. कूर्म पु. 2/33

तदुक्तम्–

**मुक्तिस्तु त्रिविधा साध्वि! श्रुत्युक्ता सर्वसम्मता।**

**निर्वाणपददात्री च हरिभक्तिप्रदा नृणाम्॥**

**हरिभक्तिस्वरूपाञ्च मुक्तिं वाञ्छन्ति वैष्णवाः।**[1] मुक्तजीवस्य व्यक्तित्वलोपः तस्य ब्रह्मीभावत्वं गरुडपुराणे निरूपितम्–

**"अन्ये निर्वाणरूपाञ्च मुक्तिमिच्छन्ति साधवः"**[2]

वह्निपुराणे विषयेऽस्मिन् एवं निगदितम्–

**अस्ति देवो हरिः शान्तः कारणोपायवर्जितः।**

**तं ज्ञात्वा तु भवेन्मुक्तिर्निर्मला काययोगिनः॥**

**धर्मात्स्वर्गञ्च मोक्षञ्च यदन्यदपि दुर्लभम्।**

**धर्म्ममर्थञ्च कामञ्च मोक्षञ्च ऋषिसत्तम्॥**

**समाप्नोति पुमान्नित्यं नारायणपरायणः॥**[3]

---

1. ब्रह्मवै पु.प्र.ख. 22 अध्यायः
2. ग.पु.पू.ख. 230/31-34
3. वह्निपुराणम्

# भारतीया संस्कृतिः तत्र गुरुतत्त्वम्

डॉ.महानन्दझाः

वैदिकचिन्तनस्य आधारभूता भारतस्य पुरातनी संस्कृतिर्विद्यते। सा च संस्कृतिः वैदिककालादारभ्य अद्यावधियावत् परम्परानुसारिणी गतिशीला विद्यते। अस्याः संस्कृतेः प्रकृतिर्वर्तते यत् सा न स्थिरा अपितु निरन्तरं देशभाषानुसारिणी गतिशीलतामाधृत्य पुरो धावति। तत्र या काचित् रुढिस्तामपहाय जीवनदायिनीं भावनां पुरस्कृत्य नदीधारेवाग्रेसरति। अतः स्थूलरूपेण विभिन्ना दृश्यमानापि सूक्ष्मरूपेण सा अन्तःप्रेरणादृष्ट्या अभिन्नैव। इयं महनीया संस्कृतिः सदैव गतिमती, न खलु कदापि निर्जीवतत्त्वानामिव गतिहीना, स्थिरा एकरूपा च। संस्कृतशब्दस्य ऋग्वेदसंहितायां[1], यजुर्वेदसंहितायां[2] परवर्तिवाङ्मये च प्रयोगो दृश्यते। संस्कृतिशब्दस्य च प्राथमिकः प्रयोगः शुक्लयजुर्वेदसंहितायामित्थं रूपेण दृष्टिगोचरो भवति-

अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम। सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽग्निः।[3]

ऐतरेयब्राह्मणेऽपि संस्कृतिशब्दस्य व्यवहारः दृश्यते। यथा- आत्मसंस्कृतिर्वै शिल्पानि।[4] संस्कृतिशब्दस्य प्रयोगविषये शुक्लयजुर्वेदसंहिता-भाष्यकारयोः उवटमहीधरयोः परस्परभेदोऽवलोक्यते। संस्कृतिशब्दस्यार्थः ''संस्कारः''[5] इति उव्वटः स्वीकरोति तत्रैव महीधरः संस्कृतिशब्दः संस्कारवाचकः[6] इति स्वीकरोति।

पाणिनिव्याकरणानुसारेण संस्कृतिशब्दस्य निष्पत्तिः ''सम्परिभ्यां करोतौ भूषणे''[7] इति सूत्रेण सुट्प्रत्यये कृते भवति।

अस्यैव सूत्रस्य व्याख्यानं करोति सिद्धान्तकौमुद्यां भट्टोजिदीक्षितः- सम्परिभ्यां करोतौ भूषणे

---

1. ऋग्वेदसंहिता- 2.76
2. शुक्लयजुर्वेदः- 4.34
3. तत्रैव- 7.14
4. ऐतरेयब्रा. 6.5
5. प्रथमा संस्कृतिः- स प्रथमः सोम सत्कारः क्रियते। (उव्वटभाष्यम्-7.14)
6. सा प्रथमा मुख्या संस्कृतिः, सोमसंस्कारो यस्येन्द्रस्य क्रियते। महीधरभाष्यम्- 7.14
7. अष्टाध्यायी 6.1.137

च सुट् स्यात् भूषणेऽर्थे।[1] संस्कारशब्दोऽपि अनेनैव सूत्रेण सिद्ध्यति। न्यायमीमांसादिदर्शनेषु संस्कारशब्दस्य विविधाः प्रवृत्तिनिमित्तभूताः अर्थाः सन्ति।

संस्कृत-संस्कारपरिष्कारप्रभृतिपदानां मूलभूताप्रकृतिः एकैव प्रत्ययास्तु भिन्नाभिन्नाः। एतेन सिध्यति यत् दार्शनिकधार्मिक-आध्यात्मिक आचारादिकादि जीवनधारायाः संस्कारेण यया परिष्करणं भवति, यया च मानवस्य पुरुषार्थचतुष्टयसम्बन्धिजीवनं कालुष्यरहितं माङ्गलिकं च जायते सा संस्कृतिः। आधुनिकभाषासु आधुनिकेऽर्थे संस्कृतिशब्दस्यार्थो भवति कल्चर इति। लोके सम्प्रति आंग्लभाषायां कल्चरशब्दार्थे प्रयुज्यमानस्य संस्कृतिशब्दस्य व्याख्याप्रसङ्गे मिथो विवदन्ते वादरसिकाः। एवम्भूतस्य तस्य परिभाषा लक्षणञ्च नाव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यं परिदृश्यते। आंग्लभाषीयकल्चरशब्दोऽपि कृषिविज्ञान-रसायनविज्ञान-चिकित्साविज्ञान-राजनीतिप्रभृतिषु विविधेषु सन्दर्भेषु विभिन्नार्थबोधको दृश्यते।[2]

ऐतिहासिकधार्मिकसन्दर्भेषु च या विविधाः व्याख्याः कल्चरशब्दस्य कृताः सन्ति। केचन प्रतिपादयन्ति यत् या खलु जीवनधारा देशे मानवानामन्तर्बहिश्च संस्करोति, परिष्करोति अथ च जातीयदेशीय राष्ट्रियविचाराचारान् परिव्याप्नोति सा संस्कृतिः।[3] केचन वदन्ति यत् वैदिक-नैतिक-धार्मिक-समाजिकभावनाः परिष्कृता विचाराचाराश्च यया व्यक्तीक्रियन्ते सा संस्कृतिः।[4] अन्येषां मते द्वन्द्वविरोधादिपरिहासपुरःसरं मानवस्यान्तरङ्गवहिरङ्गकर्ममनसोः सामञ्जस्यकारिणी मूलधारा संस्कृतिरेव।[5] इत्थमेव विभिन्नानि लक्षणानि परिभाषा च शताधिकाः सन्ति परन्तु सर्वत्र साक्षात्परम्परया प्रत्यक्षतः परोक्षतश्च ज्ञायते यत् संस्कृतिपदार्थः भिन्नः सभ्यतापदार्थश्च भिन्नः।

सभ्यतायाः घनिष्ठः सम्बन्धः बाह्याचारव्यवहारादिभिः सह विद्यते संस्कृतेश्चान्तरिकबोध-विचारसंस्कारपरिष्कारपरम्परादिभिः समं भवति। सा च संस्कृतिः गतिमती, परिवर्तनशालिनी, प्राणदायिनी सत्वरूपा प्राणरूपा च।[6]

भारतीयसंस्कृतिर्यद्यपि धर्मार्थकाममोक्षपुरुषार्थचतुष्टयचेतनाधारासंश्लिष्टा सत्यपि मूलतः आध्यात्मिकी। तत्र जीवने आवश्यकयोः अर्थकामयोरुपरि शक्तिसन्तुलनरूपेण अनिवार्यतः धर्मस्य नियन्त्रणं परमावश्यकम्। यतोऽहि-

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥[7]**

---

1. सिद्धान्तकौमुदी- 6.1.137
2. Is India civilized- p.44
3. म.म. गोपीनाथकविराजः - भारतीयसंस्कृति और साधना- पृ. 211
4. श्रीदामोदरसातवलेकरः- भारतीयसंस्कृतिः पृ. 25
5. डा. राधाकृष्णन्- धर्म तुलनात्मकदृष्टि में- पृ. 88
6. संस्कृतिसङ्गमः पृ.-19 आचार्यक्षितिमोहनसेनकृतः
7. मनुस्मृतिः द्वितीयाध्याये

इति मनुवचनमाधृत्य अर्थकामौ अमर्यादितौ न स्याताम् तदर्थं तयोरुपरि धर्ममर्यादा स्थापनीया। उक्तञ्च भगवता श्रीकृष्णेन गीतायाम्-

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।**

**सङ्गात् सञ्जायते कामः कामात्क्रोधोऽभिजायते।।[1]**

**क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः।**

**स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति।।[2]**

विषयसङ्गानुध्यानेन क्रोधसम्मोहकामानां परम्परा समुद्भवति ततः स्मृतिभ्रष्टो भवति ततः बुद्धिर्नश्यति ततःपरं मानवस्य विनाशः भवति। अतः धर्मेण नियमितौ अर्थकामौ भवतः। धर्मश्चात्र सङ्कुचितदृष्ट्या न ग्राह्यः अपितु धर्मलक्षणोपेतः शाश्वतिकः स्वधर्मो ग्राह्यः। स च धर्मः इत्थं निरूपयति मनुः-

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**

**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।[3]**

स्व-स्वधर्मानुष्ठाने भगवता श्रीकृष्णेनापि निर्दिष्टम्-

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।**

**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु।।[4]**

इत्थञ्च धर्मेण नियन्त्रितौ अर्थकामौ निःश्रेयसमार्गगामिनौ संस्कृतेः आध्यात्मिकतामेव प्रकाशनं कुरुतः।

भारतीयसंस्कृतिविषये विशेषतः इदमप्यवधारणीयं विद्यते यत् वैदिकानुष्ठान-गणपत्यादिपूजन-पुराणादिपाठानुष्ठानेषु च सर्वत्र पौराणिकविधीनां प्रयोगः दृष्टिपथे आयाति। यत्र-तत्र स्तोत्रादिपाठा-व्यवहितपूर्वाङ्गत्वेन अङ्गन्यासकरन्यासादिप्रतिपादनं दृश्यते। श्रीमद्भागवतरामायणादिपुराणानां यदा साप्ताहिकाद्यनुष्ठानं क्रियते तदा तस्य समापनमहोत्सवे हवनादियज्ञविधानानन्तरमेव तेषां पूर्णता भवति। एवमेव शतचण्डीपाठानुष्ठान-रुद्राभिषेकसत्यनारायणव्रतकथा-उपनयनविवाहादि- माङ्गलिकानुष्ठानकाले सर्वत्र नियमेन श्रुतिस्मृतिपुराणोक्त हवनादीनि सम्पादनीयानि भवन्ति। अतएव मन्ये सङ्कल्पवाक्ये श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थम् इति वाक्यस्य योजना तत्र भवत्येव। किं बहुना, काव्यकाराः कवयोऽपि शिवेतरक्षतयेऽपि काव्यं कुर्वन्ति। यथोक्तं काव्यप्रकाशकारेणाचार्यमम्मटेन-

---

1. श्रीमद्भगवद्गीता- 2.62
2. तत्रैव- 2.63
3. मनुस्मृतिः 6.92
4. श्रीमद्भगवद्गीता- 18.45

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेशयुजे।।**[1] इति।

अतः लोकक्लेशपीडातप्ताः, लोककल्याणविषये सततं चिन्तयन्तः, समस्तलोकानां स्वतपश्चर्यादिभिः सभाजयन्तः पुराणमुनयः, न्यायवैशेषिकादिदर्शनानां समुपदेष्टारः गुरवः आचार्याः स्मारं स्मारं प्रणम्याः समादरणीयाश्च सन्ति, येषां तपःपूतसारस्वतसाधनया एवं विधा सर्वस्याधारभूता भारतीयासंस्कृतिः साम्प्रतिके भौतिकयुगेऽपि चकास्ति।

पुरुषार्थचतुष्टयसम्पादनाय निखिलवैभवसम्पादनाय, समस्तलौकिकविपत्तिविनाशाय, समस्तशास्त्रीय-संशयसमुच्छेदनाय, अध्यात्मिकपिपासायाः सर्वविधसमाधानाय च भारतीयसंस्कृत्यां गुरुतत्त्वस्याचार्यतत्त्वस्य चास्ति महत्वपूर्णं स्थानं गुरोराश्रयस्य गृहीता कोऽपि सौभाग्यशाली एव भवति। शास्त्रे गुरोः प्रभावविषये, तस्य चमत्कारविषये, तस्य अन्धकारनिवारणक्षमताविषये सविस्तरेण चर्चा विद्यते-यथा-

**अस्त्यस्मिन् महसां महानिधिरसौ देवो विवस्वान् महान्**
**यस्मिञ्जाग्रति जाग्रतीव रजनी सुप्ता इमे जन्मिनः।**
**किन्त्वेका महती ततो विजयते श्रीदैशिकाङ्घ्रिद्युति-**
**र्यद्भासाच्छुरितं चिरन्तनतमो हित्वैव जागर्ति सत्।।**[2]

एवञ्च-

**दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुः**
**स्पर्शश्चेत्तत्र कल्प्यः स नयति यदहो स्वर्णतामश्मसारं।**
**न स्पर्शत्वं तथापि श्रितचरणे युगे सद्गुरुः स्वीयशिष्ये**
**स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन चालौकिकोऽपि।।**[3]

पारसमणेः भवति वैशिष्ट्यं यत् तेनाऽयः स्पर्शबलात् अयसः स्वर्णतालाभो भवति किन्तु ततोऽपि अधिकं वैशिष्ट्यं गुरोरस्ति यत् गुरोः स्पर्शबलात् शिष्यः गुरुसदृशः जायते। एवमेव भगवान् भास्करः प्रकाशस्य महानिधिरस्ति। तस्य उदयकालसममेव जगतः अन्धकरनिवृत्तिः जायते किन्तु ततोऽपि प्रकाशपुञ्जस्वरूपः गुरोः कृपाप्रसारः विद्यते।

यस्य कृपया जन्मजन्मान्तरस्यान्धकारस्य निवृत्तिः भवत्येवेति निश्चप्रचम्। भारतीयदर्शनपरम्परा प्रायः द्विधा विभक्ता विद्यते। एका वैदिकीपरम्परा सनातनी अपरा चावैदिकी परम्परा किन्तु उभयोः परम्परयोः गुरोः महत्वपूर्णं स्थानं निर्दिष्टमेव। ईश्वरवादिनः भवन्तु निरीश्वरवादिनो वा भवन्तु सर्वेऽपि

---

1. काव्यप्रकाशः 1.2
2. आचार्यरामेश्वरझाग्रन्थावलि।
3. सुभाषितरत्नभाण्डागारम्

निबन्धरचनाकाले गुरोः स्मरणं कृतवन्त एव।

भारतीयवाङ्मयस्य विविधपरम्परायां शब्दशास्त्रस्य व्याख्याता भवेत्, आलङ्कारिकनिबन्धस्य निर्माता भवेत्, मीमांसाशास्त्रस्य विविधपरम्परायाः उद्भावको भवेत्, वेदान्तसूत्रस्य विविधभाष्याणां सम्पादनकर्त्तारः भवेयुः न्यायवैशेषिकसांख्ययोगप्रभृतिसिद्धान्तग्रन्थानां रचयितारः वा भवेयुः सर्वैरपि गुरोः स्मरणं कृतमेव। यथा-

**निधाय हृदि विश्वेशं ....... क्रियते तर्कसङ्ग्रहः।**[1]

**ध्यायं ध्यायं परं ब्रह्म ........ कुर्मः प्रौढमनोरमाम्।**[2]

**वन्दे बोधमयं नित्यं गुरुं शङ्कररूपिणम् इत्यादि**[3]

समष्टिव्यष्टिब्रह्माण्डे परमचैतन्यतत्त्वं तद्वदेवानुस्यूतं विद्यते यथा दुग्धे नवनीतं, पृथिव्यां गन्धः, अग्नौ उष्णता, वायौ स्पर्शः, जले च शैत्यम् किन्तु चराचरात्मकेऽस्मिन् विश्वे व्याप्तस्य चैतन्यस्यानुभूतिः कया रीत्या भवेदिति जिज्ञासायां गुरुतत्त्वशरणागतिरेव तत्समाधानम्। तस्माद्गुरुं प्रपद्येत साक्षात् ब्रह्म प्रत्यक्षगम्।[4] संसारे तापत्रयात् आत्यन्तिकी मुक्तिः वाञ्छिता स्यात् सांसारिकं वैभवमपेक्षितं वा स्यात् सर्वत्र गुरोः वरणं नितान्तमावश्यकं भवति। अतएवोक्तं मानसे गोस्वामिना तुलसीदासेन- **गुरुविन होई कि ज्ञान, ज्ञान कि होई विराग विनु।**[5] सम्भवतः इमामेवावस्थामाकलय्य कश्चित् सन्तकविः परमात्मनापेक्षया गुरोर्महत्वमङ्गीकृत्य काव्यमयीं भावनां प्रकाशयामास-

**गुरुगोविन्द दोऊ खड़े काके लागौं पाय।**

**बलिहारी गुरुदेव की जिन्ह गोविन्द दियो लखाय।।**[6]

अनेन स्पष्टं भवति यत् परमात्मनः प्राप्तेरभिलाषा भवेत्, विविधतत्त्वानां जिज्ञासा भवेत्, संसारिकसौविध्यस्याभिलाषा भवेत्, तापत्रयनिराकरणपुरःसरं आत्यन्तिकविमुक्तेः कामना भवेत्, शाश्वतशान्तिप्राप्तेः उत्कटा भावना वा भवेत् सर्वत्र गुरोराश्रयः, गुरौ निष्ठा, गुरोः अहैतुकी दयालुता अनिवार्या एव। अतएव श्रीमच्छङ्कराचार्योप्याह-

**असारसंसारसमुद्रमध्ये निमज्जतो मे शरणं किमस्ति।**

**गुरो दयालो कृपया वदैतत् विश्वेश पादाम्बुजदीर्घनौका।।**[7]

---

1. तर्कसंग्रहः- मङ्गलाचरणम्
2. सिद्धान्तकौमुदी- मङ्गलाचरणम्
3. श्रीरामचरितमानसम्
4. उपनिषत्।
5. रामचरितमानसउत्तरकाण्डः दोहा- 89
6. बीजक, कबीरदासः
7. श्रीशङ्कराचार्यप्रश्नोत्तरी श्लोकः 1

श्रीरामचरितमानसे संवादचतुष्टयं विद्यते उमामहेश्वरसंवादः, याज्ञवल्क्यभरद्वाजसंवादः, गरुडकाकभुशुण्डीसंवादः, तुलसीसंतसंवादश्च। चतुर्षु संवादेषु गुरोः महती महत्ता स्थापिता। तत्र उमामहेश्वरसंवादे- तुम त्रिभुवनगुरु वेद वखाना, याज्ञवल्क्यभरद्वाजसंवादे- गुरु विन होई कि ज्ञान, ज्ञान कि होई विराग विनु, गरुडकाकभुशुण्डीसंवादे- गुरु विन भवनिधि तरै न कोई एवञ्च तुलसीसंतसंवादे - जों विरंचि सङ्कर सम होई।[1] गोस्वामिविरचिते मानसे श्रीरामभक्तिपरायणः काकभुशुण्डी पक्षीविशेषः। काकस्य जन्मतः वर्तमानशरीरसम्पादनं यावत् दीर्घकालिकं वृत्तं सञ्जातम्, तस्य मूले गुरुकृपायाः समायोजनमेव परिलक्ष्यते। गुरुकृपावशादेव काकस्य पूर्वजन्मवृत्तं स्मृतं भवति।

अस्मिन्नेव क्रमे गुरुकृपायाः दयायाः, स्मरणं यथा-

**एक मूल मोहि विसर न काऊ।**

**गुरुकर कोमल शील स्वभाऊ[2]**

काकस्य तात्पर्यमिदं यत् अहं तु गुरुद्रोही आसम् यद्वशात् भगवान् शङ्करः घोरं शापं प्रदत्तवान्। इमं विपत्तिमवलोक्य गुरोः कारुणिकं हृदयं व्याकुलं सञ्जातम् भगवतः शिवस्य प्रसन्नार्थं मामुद्धर्त्तुञ्च गुरुः श्रुतिमयी स्तुतिः कृता-

**नमामीशमीशाननिर्वाणरूपं विभुं व्यापकं ब्रह्मवेदस्वरूपम्।**

**निजं निर्गुणं निर्विकल्पं निरीहं चिदाकाशमाकाशवासं भजेहमित्यादि।[3]**

गुरोः एतादृशीमहैतुकीं कृपामभिलक्ष्य कविः वदति-

**हाहाकार कीन्ह गुरु सुनि दारुन शिवश्राप।**

**कम्पित मोहि विलोकि अति उर उपजा परिताप।।[4]**

**जेहि कर होय परम कल्याना।**

**सोई काहु अव कृपा निधाना।।[5]**

यत्र भारते काकसदृशेऽपि जीवे एतादृशी कल्याणमयी भावना सदा प्रवाहिता भवति सैव वस्तुतः भारतीया संस्कृतिः। अव्याहतरूपेण सर्वत्र इयं संस्कृतिः प्रवाहिता भवेत्, अयं संस्कारः वर्द्धताम् इति कामनया स्वाभिप्रायं प्रकाश्य विरमामीति शम्।

---

1. श्रीरामचरितमानसबालकाण्डः
2. श्रीरामचरितमानसम्- उत्तरकाण्डः
3. तत्रैव
4. तत्रैव 107
5. श्रीरामचरितमानसम्- उत्तरकाण्डः

# जैमिनिमतानुसारमायुर्विचारः

डॉ.रतीशकुमारझा

वादरायणव्यासस्य शिष्येषु सामवेदस्य उद्गाता प्रथमप्रमुखाचार्य एवं पूर्वमीमांसादर्शनस्य सूत्रकारः महामुनिजैमिनिः भगवतः विश्वनाथस्य नगर्य्यां काश्यां (वाराणस्यां) महल्लोकोपकारकग्रन्थ-मेतद्ग्रथितवान्। यज्ज्योतिषशास्त्रस्य प्रमुखग्रन्थत्वेन लब्धप्रतिष्ठः।

जैमिनिसूत्रेषु आयुर्योगानां वर्णनं द्वितीयाध्यायस्य प्रथमपादे अथ च तृतीयाध्यायस्य द्वितीयपादे कृतम् अत्र जैमिनिमतेनायुर्विचारो विधीयते-

**आयुः पितृदिनेशाभ्याम्।**[1]

अत्र पितृदिनेशशब्दौ तेन कटपयसारण्याधारितम् अंकानां वामतोगत्याधारितञ्च लग्नेशाष्टमेशौ स्वीकृतौ।

तेनाभिहितं यत् लग्नेशाष्टमेशौ यदि चरराशौ अथवा एकः स्थिरराशौ अपरः द्विस्वभावराशौ भवेत् चेत्तदा दीर्घायुर्योगो भवति। यथा-

**प्रथमयोरुत्तरयोर्वादीर्घम्।**[2]

अत्र प्रथमशब्दार्थश्चरराशिस्तथोत्तरशब्दार्थः स्थिरद्विस्वभावराशी च गृहीतः। मध्यमायुर्योगाय तेन विशेषसूत्रमेकं विहितम्। यथा-

**प्रथमद्वितीयोरन्तयोर्वा मध्यम्।**[3]

अर्थात् प्रथमशब्दार्थश्चरराशिस्तथा द्वितीयशब्दार्थः स्थिरद्विस्वभावराशीति कृतम्। लग्नेशो यदि चरराशौ स्थितः स्यात्तथा अष्टमेशः स्थिरराशौ वा अष्टमेशः चरराशौ तथा लग्नेशः स्थिरराशौ भवेत् अथवा लग्नेशाष्टमेशौ द्विस्वभावराशौ स्याताम्, तदा मध्यायुर्योगो भवति।

अल्पायुर्योगविषये तस्य मतं यथा-

**मध्ययोराद्यन्तयोर्वा हीनम्।**[4]

---

1. जैमिनिसूत्रम्- 2.1
2. जैमिनिसूत्रम्- 2.2
3. जैमिनिसूत्रम्- 2.2
4. जैमिनिसूत्रम्- 2.4

लग्नेशाष्टमेशौ यदि स्थिरराशौ स्यातामथवा एकश्चरराशौ तथापरो द्विस्वभावराशौ अर्थात् चरराशौ लग्नेश: द्विस्वभावेऽष्टमेश: अथवा द्विस्वभावे लग्नेश: चरराशावष्टमेश: भवेत् तदाऽल्पायुर्योगो भवति । उपर्युक्तयोगा: सरलतया निम्नश्लोकेनावज्ञातुं शक्यन्ते-

**चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्वचरस्थिराः।**

**द्वन्द्वे स्थिरद्वन्द्वचरा दीर्घमध्याल्पकाः क्रमात्॥[1]**

उपर्युक्तयोगत्रयं निम्नसारणी द्वारा प्रदर्श्यते।

| दीर्घायुर्योगः | मध्यमायुर्योगः | अल्पायुर्योगः |
|---|---|---|
| 1. चरभे लग्नेश: चरभेऽष्टमेश: | 1. चरभे लग्नेश: स्थिरभेऽष्टमेश: | 1. स्थिरभे लग्नेश: स्थिरभेऽष्टमेश: |
| 2. स्थिरभे लग्नेश: द्विस्वभावेऽष्टमेश: | 2. चरभेऽष्टमेश: स्थिरभे लग्नेश: | 2. चरभे लग्नेश: द्विस्वभावेऽष्टमेश: |
| 3. द्विस्वभावे लग्नेश: स्थिरभेऽष्टमेश: | 3. द्विस्वभावे लग्नेश: द्विस्वभावेऽष्टमेश: | 3. द्विस्वभावे लग्नेश: चरभेऽष्टमेश: |

आचार्यमुकुन्ददैवज्ञेन स्वकीयायुनिर्णयग्रन्थे एतेषामायुयर्योगानां वर्णनमित्थं कृतम्।

**प्रागलग्नरन्ध्रगृहपौ चरभेऽथवा तौ स्थास्नुद्विदेहभगतौ यदि दीर्घमायुः।**
**तौ चेद् द्विमूर्तिभवनेऽगचरस्थितौ वा मध्यायुरुक्तमगराशिसमाश्रितौ तौ॥**

**अल्पायुरन्त्यचरराशिगतौ यदा तावित्थुद्गमोडुपतितः परिचिन्तनीयम्।**
**होराङ्गजन्ममतनुतोऽपि विचिन्त्यमेतदैक्ये तदायुरुदितं हि मतत्रयस्य॥[2]**

अनेन प्रकारेण त्रिप्रकारेणायुर्निर्णयानन्तरं जन्मलग्नेन होरालग्नेन चापि आयुर्विचार: करणीय: एवं शनिचन्द्राधारेणापि विचारणीय:। यथा- जैमिनिसूत्रे प्रतिपादितम्-

**एवं मन्दचन्द्राभ्याम्।[3]**

प्रकारत्रये समानरूपता भवेच्चेत्तदा विसंवादो न भविष्यति। यद्येकप्रकारेण भिन्नायु: प्रकारद्वयेन समानायुर्भवेत् तदा तेन प्रकारद्वयेन प्राप्तायो: प्रामाण्यं कथितम्। यथा-

**संवादात् प्रामाण्यम्।[4]**

---

1. जातकपारिजातम् पृ. 184
2.. आयुनिर्णय: 3.21,22
3. जैमिनिसूत्रम्- 2.5
4. जैमिनिसूत्रम्- 2.6

त्रिप्रकारेषु योगेषु यदि भिन्नायुः लभेच्चेत्तदा होरालग्नतः प्राप्ताषोर्ग्रहणं करणीयम्। यथा –

**विसंवादे पितृकालतः।**[1]

एतासु भिन्नासु स्थितिषु यदि लग्ने सप्तमे वा स्थाने चन्द्रशन्योः स्थितिः स्यात्तदा चन्द्रशन्याधिरतायुर्गृहीतव्यम्। यथा-

**पितृलाभे चन्द्रे चन्द्रमन्दाभ्याम्।**[2]

एतदायुर्निर्णयविषये पराशरेण स्वकीयपराशरकारिकायामनेन प्रकारेण मतं स्पष्टी कृतम्-

**आदौ लग्नाष्टमेशाभ्यां योगमेकं विचिन्तयेत्।**
**जन्महोराविलग्नाभ्यां द्वितीयं परिचिन्तयेत्॥**

**तृतीयं शनिचन्द्राभ्यां चिन्तयेद्द्विजोत्तम।**
**योगत्रयेण योगाभ्यां सिद्धं यद्ग्राह्यमेव तत्॥**

**योगत्रयविसंवादे लग्नहोराविलग्नतः।**
**लग्ने वा सप्तगे चन्द्रे चिन्तयेन्मन्दचन्द्रतः॥**[3]

बापूदेवशास्त्रिणाऽस्मिन् विषये प्रतिपादितम्-

जन्मलग्नाष्टमलग्नेशाभ्यां लग्नचन्द्राभ्यां लग्ने सप्तमे वा चन्द्रे स्थिते लग्नचन्द्राभ्यामन्यथा शनिचन्द्राभ्यामायुषः प्रामाण्यम्। पितृलाभगे चन्द्रे मन्दचन्द्राभ्यामिति सूत्रात्। लग्नहोरालग्नाभ्याञ्चेति प्रकारत्रयेणायुर्निर्णेतव्यम्।

**त्रिधाऽप्येकरूपायुष्यागते तदैव ग्राह्यम्।**
**एवं विसंवादे प्रकारद्वयागतायुर्ग्राह्यम्।**
**त्रयाणां विसंवादे लग्नहोरालग्नायुग्राह्यम्।**
**एवं विसंवादे लग्नसप्तमयोरन्यतमे चन्द्रे लग्नचन्द्रायुर्ग्राह्यम्।**[4]

उपर्युक्तानां त्रयाणां योगानामनुसारेण दीर्घायुर्मध्यायुरल्पायुषां क्रमशो भेदत्रयं दृश्यते-

**दीर्घायुः-**

**दीर्घे योगत्रयेणैवं नखचन्द्र ( 120 ) समाब्दका,**

**योगद्वयेन वस्वाशाः ( 108 ) योगैकेन रसाङ्कका:( 96 )॥**

---

1. जैमिनिसूत्रम्- 2.8
2. जैमिनिसूत्रम्- 2.9
3. जातकपारिजाते अरिष्टाध्यायः पृ. 185
4. जातकपारिजाते अरिष्टाध्यायः पृ. 185

**मध्यायुः-**

**मध्ये योगत्रयेणैवं खाष्ट ( 80 ) तुल्याब्दकाः स्मृताः।**

**द्वयगा ( 72 ) योगद्वयेनात्र योगैकेनाब्धिषण्मताः ( 64 )॥**

**अल्पायुः-**

**अल्पे योगत्रयेणात्र द्वात्रिंशन्मित ( 32 ) वत्सराः।**

**योगद्वयेन षट्त्रिंशत् ( 36 ) योगैकेन च खाब्धयः ( 40 )॥[1]**

उपर्युक्ता योगाः चक्रेणानेन स्पष्टीक्रियते-

| आयुः | एकयोगे सति वर्षाणि | योगद्वये सति वर्षाणि | योगत्रये सति वर्षाणि |
|---|---|---|---|
| दीर्घायुः | 96 | 108 | 120 |
| मध्यायुः | 64 | 72 | 80 |
| अल्पायुः | 32 | 36 | 40 |

दीर्घायुर्योगे योगत्रये विंशत्यधिकैकशतम् (120) योगद्वये अष्टोत्तरशतम् (108) तथा योगैकेन षण्णवति (96) वर्षाणि भवन्ति। मध्यमायुर्योगे योगत्रये अशीतिः (80), योगद्वये द्वासप्ततिः (72) योगैकेन चतुष्षष्टिः (64) वर्षाणि भवन्ति। अल्पायुर्योगे योगत्रये चत्वारिंशत् (40) योगद्वये षट्त्रिंशत् (36) योगैकेन द्वात्रिंशत् (32) वर्षाणि भवन्ति।

उपर्युक्तत्रिविधायुर्दायानुक्रमे कक्ष्याह्रासकक्ष्यावृद्धेर्वा विचारः आयुर्निर्धारणे कृतः। यथा जैमिनिनोक्तम्-

**शनौ योगहेतौ कक्ष्याह्रासः।[2]**

शनेः योगकारकस्थितौ कक्ष्याह्रासो भवति अर्थाद् दीर्घायुषः प्राप्तौ मध्यायुः तथा मध्यायुषः प्राप्तौ अल्पायुः एवञ्चाल्पायुषः प्राप्तौ हीनायुः भवति। अन्यदाचार्याणां मते शनेर्योगकारकत्वात् कक्ष्यावृद्धिर्जायते। यथोक्तम्-

**विपरीतमित्यन्ये।[3]**

कक्ष्याह्रासविषये मुनिना तृतीयाध्यायस्य द्वितीयपादेऽपि कथितम्-

**गुरौ केन्द्रे मन्दाराभ्यां दृष्टे शनिभोगहेतौ कक्षापवादः।[4]**

---

1. जैमिनिसूत्रम् पृ. 63
2. जैमिनिसूत्रम् 2.01.10
3. जैमिनिसूत्रम् 2.01.11
4. जैमिनिसूत्रम् 3.2.3

1. बृहस्पतितः केन्द्रस्थानेषु यदि शनिमंगलयोर्दृष्टिः स्यादथवा कस्मिंश्चिदुक्तस्थानेष्वन्यतमे स्थाने यदि शनिः स्यात् तदा कक्ष्याह्रासो भवति। कक्ष्यावृद्धिर्विविषये जैमिनेः कथनमित्थम्-

पितृलाभगे गुरौ केवलशुभदृग्योगिनी च कक्ष्यावृद्धिः।[1]

यदि लग्ने सप्तमे वा स्थाने बृहस्पतिः स्यादथवा शुभग्रहेण युतो दृष्टो वा भवेत् तदा कक्ष्यावृद्धिर्भवति। अर्थादल्पायुषि मध्यायुः, मध्यायुषि दीर्घायुः, तथा च दीर्घायुषि पूर्णायुषः प्राप्तिर्भवतीति आर्षसिद्धान्तः।

अनेन प्रकारेण आयुर्दायनिश्चिते सति आयुषः पूर्तिः भवति। विशेषत्वेन जैमिनिः द्वारबाह्यराशितः आयुषः पूर्तिः स्वीकरोति। जैमिनिमतेन विशेषतः शुभदशासमयः आयुषः समाप्तेः कारणत्वेन भवति।

यद् राशेः वर्षज्ञानमपेक्षितं तस्य स्वामी ततः यावद् राश्यन्तरेऽस्ति। तावदेव राशिदशावर्षो भवति। विषयेऽस्मिन् मुनिर्मतमित्थम्। यथा-

**नाथान्ताः समाः प्रायेण।**[2]

महर्षिजैमिनिः दशाखण्डेन आयुषः समाप्तिस्थितिं ज्ञापयति। तेनाभिहितम् यत् खण्डानुसारं स्थिरदशायामायुषः समापनं भवति। अर्थात् तृतीयपादोक्तस्थिरदशायां प्रथमदशाप्रदस्य राशित आरभ्य चतुर्थपर्यन्तं प्रथमखण्डः, पञ्चमतोऽष्टमपर्यन्तं द्वितीयखण्डः नवमतो द्वादशपर्यन्तञ्च तृतीयखण्डो भवति। यदि अल्पायुषः स्थितिः स्यात् तदा प्रथमखण्डे मध्यायुषः स्थितौ द्वितीयखण्डे तथा दीर्घायुषः स्थितेः तृतीयखण्डे आयुषः समाप्तिर्भवति। खण्डेष्वेषु राशिविशेषः आयुषः समाप्तेर्बोधकोऽस्ति। यथा-

स्थिरदशायां यथाखण्डनिधनम्। तत्रर्क्ष विशेषः।[4]

उक्तखण्डानुसारं मृत्युयोगे यद्राशिः पापग्रहयोर्मध्ये भवति अथवा पापग्रहात् त्रिकोणेषु यद्राशिर्भवति अथवा यद्रराशितः द्वादशेऽष्टमे वा स्थाने पापग्रहाः भवन्ति तस्य दशायामथवा द्वारबाह्यराशौ यदि केवलं क्षीणचन्द्रमसः शुक्रस्य च दृष्टिर्भवति तदा बाह्यराशिदशायामथवा अष्टमे द्वादशे वा क्षीणचन्द्रशुक्रयोर्दृष्टिः स्यात्तदा द्वादशाष्टमयोर्दशायामायुषः समाप्तिर्भवति। इत्थं मृत्युकारकस्य दशाप्राप्तौ सत्यपि अष्टमेशेन दृष्टप्रथमदशाप्रद्राशेरन्तर्दशायामायुषः समाप्तिर्भवति। यथा-

**पापमध्ये पापकोणे रिपुरोगयोः पापे वा।**
**तदीशयोः केवलक्षीणेन्दुशुक्रदृष्टौ वा॥**
**तत्राप्याद्यर्क्षारिनाथदृश्यनवभागाद्वा ॥**[4]

---

1. जैमिनिसूत्रम् 2.01.14
2. जैमिनिसूत्रम् 1.01.28
3. जैमिनिसूत्रम् 2.01.30,31
4. जैमिनिसूत्रम् 2.01.35-39

लग्नतोऽष्टमेशं यावत् सप्तमेशतोऽष्टमेशं यावद् अनयोः यस्य बलवत्त्वं भवति तद्रुद्रग्रहपदेनाभिधीयते। निर्बलग्रहा अपि पापदृष्टाः सन्तः रुद्रत्वेनाभिधीयन्ते। रुद्रग्रहबलवत्वे शुभग्रहदृष्टियुक्ते शूलपर्यन्तमायुर्मन्यते। अर्थात् प्रथमदशाप्रदराशितः राशिचतुष्टयं यावत् प्रथमशूलं, पञ्चमराशितोऽष्टमपर्यन्तं द्वितीयशूलं तथा नवमतो द्वादशपर्यन्तं तृतीयशूलं कथ्यते। क्रमेऽस्मिन् प्रथमशूलपर्यन्तमल्पायुः द्वितीयशूलपर्यन्तं मध्यायुः तथा तृतीयशूलपर्यन्तं दीर्घायुश्च भवति। यदि शुभग्रहाणां योगो भवति तदा नूनमेव शूलान्तामायुर्मन्यते। सूर्यातिरिक्तं कस्यापि पापग्रहस्य योगे सति एतत्फलन्न भवति। यथा–

पितृलाभ–भावेशप्राणी रुद्रः। अप्राण्यपि पापदृष्टः। प्राणिनि शुभदृष्टे रुद्रे शूलान्तमायुः। तत्रापि शुभयोगे। व्यर्कपापयोगे न।[1]

रुद्रग्रहाणां पापत्वशुभत्वयोः सम्बन्धे वृद्धवाक्यानुसारं यदि उभयोः प्रकारयोः रुद्रपापग्रहौ स्यातां तदा प्रथमशूले, एकः पापः अपरः शुभः स्यात् तदा द्वितीयशूले उभयोः शुभत्वेऽन्तिमशूले आयुषः समाप्तिर्भवति। एकरुद्रेऽपि यदि केवलपाप सम्बन्धश्चेत्तदा प्रथम–शूले, पाद्वयेन सम्बन्धस्तदा द्वितीयशूले, तथा शुभेनैव संयोगे तृतीयशूले आयुषः समाप्तिर्भवति।यथा–

**रुद्रयोः पापमात्रत्वे प्रथमर्क्षे मृतिर्भवेत्।**
**मिश्रत्वे मध्यशूलर्क्षे शुभत्वे चान्तभे मृतिः॥**[2]

फलितशास्त्रस्य मनीषीणां मतमस्ति यज्जन्मजन्मान्तरेषु कृतकर्मणः फलभोक्तुः प्राणिनः यावज्जीवनावधि प्राप्यते तत्तस्य प्राणिन आयुरित्यभिधीयते। एवं संचितप्रारब्धक्रियमाणकर्मणां प्रभावाद् आयुषोऽवधि कदापि स्वल्पा कदापि दीर्घा भवति।

**पूर्वकर्मफलं भोक्तुं जन्तोर्यदिह जीवनम्।**
**आयुस्तत्कर्मशक्त्यास्य दीर्घमध्याल्पतादिकम्॥**[3]

भारतीयज्योतिषशास्त्रे संचितप्रारब्धक्रियमाणात्मकस्य त्रिविधकर्मणः फलविचारः त्रिविधपद्धतिभिः क्रियते। शास्त्रेऽस्मिन् संचितकर्मणां फलविचारः जन्मकालिकग्रहस्थितिभिः अथवा ग्रहयोगैः भवति। परञ्च प्रारब्धस्य फलविचारो ग्रहदशामाध्यमेन एवञ्च क्रियमाणकर्मणः फलविचारो गोचरीयग्रहपरिभ्रमणेन क्रियते।

जन्मजन्मान्तरेषु कृतानां विविधकर्मणां फलसमुच्चयः संचितकर्मनाम्ना कथ्यते। कर्मणः वैविध्यत्वात् संचितकर्मफलेषु वैविध्यं भवति। एवम् एतस्माद् वैविध्यत्वादेव समेषां संचितकर्मणां फलं युगपद् भोक्तुं नैवार्हति। किञ्च कर्मणः भेदपरकत्वात् तस्य परिणामत्वेन प्राप्यफलमपि परस्परं विरुद्धस्वभावकं भवति। अतः कर्मफलभोगः क्रमेणैव प्राप्यते।

---

1. जैमिनिसूत्रम् 2.01.35–39
2. जैमिनिसूत्रम् पृ. 82
3. प्रश्नमार्गः 9.45

अस्मिञ्जन्मनि अस्माभिः संचितकर्मसु यावत् कर्मफलानि भोक्तव्यानि भवन्ति। तथा यस्यारम्भः जन्मना सहैव अभूत् केवलं तावदेव कर्मफलं प्रारब्धकर्मत्वेन गण्यते। एतत्प्रारब्धस्य विचारो ग्रहदशादिशा सम्पाद्यते। इह जन्मनि वयं यानि कर्म्माणि कूर्मः तानि क्रियमाणसंज्ञकानि सन्ति अथैतस्य च फलविचारो गोचरीयपरिभ्रमणेन भवति।

वस्तुतः सद्योरिष्टबालारिष्टयोगौ तादृक्स्वरूपकौ योगौ वर्तेते यौ केवलं जातकस्य पूर्वार्जितकर्मफलं सूचयतोऽपितु तौ तस्य मातृपितृभ्यां यान्यनुचितकर्म्माणि कृतानि तान्यपि संसूच्येते। यथा– जातकपारिजातकारः वैद्यनाथः स्पष्टयते–

**आद्वादशाब्दान्तरयोनिजन्मनामायुकालो निश्चयितुं न शक्यते।**
**मात्रा च पित्रा कृतपापकर्मणां बालग्रहैर्नाशमुपैतिबालकः।[1]**

वैदिकदर्शनानां मान्यतास्ति यदात्माऽमरोऽस्ति तथाऽस्य कदापि मृत्युर्न भवति। केवलं कर्म्मणामनादिप्रवाहेणैव आत्मैतदनेकानेकेषु योनिषु परिवर्तयति। आत्मनः अनादिकालीनकर्मप्रवाहकारणादेव लिंगकारणभौतिकशरीरैः सह सम्बन्धो भवति। कर्मणः पश्चात् कर्त्रा यत् प्राप्तिरूपमनिवार्यपरिणामं तत् कर्मानुबन्धः कथ्यते। एतदेव कर्मानुबन्धः कृतकर्मणां शुभाशुभफलवशादात्मानमिष्टानिष्टयोनिषु नयति। आत्मनः स्वातन्त्र्यं वशित्वं वा कर्मण्यस्ति, तत् सम्यगसम्यग् वा भवतु। परञ्च कर्मणः पश्चात् तस्यापरिहार्यफलम्भोक्तुं तस्य स्वातन्त्र्यं नास्ति। किञ्च कृतकर्मफलभोगेन विना तस्य क्षयो न भवति। एवमायुषा विना तत्फलं भोक्तुं नैव शक्यते! कारणादस्मात्कर्मानुसारमायुषि वृद्धिरल्पता वा भवति। यथा भगवान् मनुः स्वकीय स्मृतौ लिखति–

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।**
**चत्वारि तस्य वर्धन्ते आयुर्विद्यायशोबलम्।।[2]**

शुभाशुभकर्मप्रभावादायुषि न्यूनता वृद्धिर्वा भवति इत्युल्लेखः कृतः जातकपारिजातकारेण वैद्यनाथेन यथा–

**ये धर्ममार्गनिरता द्विजदेवभक्ता ये पथ्यभोजनरता विजितेन्द्रियाश्च।**
**ये मानवा दधति सत्कुलशीलसीमास्तेषामिदं कथितमायुरुदारधीभिः।।**

**ये पापलुब्धाश्चौरा ये देवब्राह्मणनिन्दकाः।**
**सर्वाशिनश्च ये तेषामकालमरणं नृणाम्।।**

**धर्मे विकल्पबुद्धीनां दुःशीलानां च विद्विषाम्।**
**ब्राह्मणानां च देवानां परद्रव्यापहारिणाम्।।**

1. जातकपारिजाते अथारिष्टाध्याये श्लो.सं.–1
2. मनु. 2.121

**भयङ्कराणां सर्वेषां मूर्खाणां पिशुनस्य च।**
**स्वधर्माचारहीनानां पापकर्मोपजीविनाम्।।**

**शास्त्रेष्वनियतानां च मूढानामपमृत्यवः।**
**अन्येषामुत्तमायुः स्यादिति शास्त्रविदो विदुः।।**[1]

योगदर्शनं कर्मवादपुनर्जन्मवादोपरि स्थितोऽस्ति। एतयोः पर्यायाभिधानन्नानुचितम्। उपनिषत्सु कर्मसिद्धान्तस्य विशेषोल्लेखः प्राप्यते। प्रत्येकस्याः क्रियायाः केनचित् कारणेन सम्बन्धो भवत्येव। तस्मात् साक्षात्सम्बन्धोऽस्ति कर्मणा जन्मक्रियायाः। सम्बन्ध एतत् काचिदाकस्मिकी घटना नास्त्यपितु द्वयोः अभिन्नभावसम्बन्धो वर्तते। प्राणिषु विद्यमानसुखदुःखयोः वैषम्यं तैः कृतकर्म्माणि स्मारयन्ति। छान्दोग्योपनिषदि सुस्पष्टशब्देषु लिखितमस्ति यत् सच्चरित्रवन्तो जनाः सुयोनिं प्राप्नुवन्ति एवं कुत्सितचरित्रवन्तः कुयोनिषु (निम्नयोनिषु) जायन्ते। इत्थमनयोः कर्मजन्मनोः अभेदसम्बन्धो विद्यते।

तद्य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीया योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणायोनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा।।[2]

महर्षि-पतञ्जलिना प्राणिभिः क्रियमाणकर्मणां चत्वारो विभागाः कृताः। ते इत्थं सन्ति- कृष्णकर्म शुक्लकर्म शुक्ल-कृष्णकर्म (मिश्रितकर्म) अशुक्ल-अकृष्णकर्म। तमोगुणस्य प्रचण्डावस्थायां मनुष्यः पापाचरणं करोति। तमस्तु आवरणकस्वरूपवानस्ति। यथा-

**गुरुवरणकमेव तमः।**[3]

एतदर्थं तत्कार्यं कृष्णसंज्ञकं भवति। सत्वगुणस्य उत्कटावस्थायां व्यक्तिः शुभकर्मयुग् भवति। सत्वगुणस्तु प्रकाशकं शुभ्रं वा भवति। **सत्वं लघु प्रकाशकम्।**[4]

एतस्मात् तत्कार्यं शुक्लत्वेनाभिहितम्। अनेन प्रकारेण कृष्णशुक्लशब्दाभ्यां क्रमशः पापपुण्यकर्मत्वेन व्यवहारो दृश्यते। अधमकोट्युत्पन्नाः दुरात्मानः कृष्णकर्म कुर्वन्ति। सात्विकचित्तवन्तः तपस्विनः स्वाध्यायिनः योगासननिरताः पुरुषाः शुक्लकर्मान्विताः भवन्ति।

मध्यमाः जनाः यथावसरं यत्र गुणानां मात्रा निम्नोच्चगता भवति तस्मिन् सति शुक्लकृष्णात्मकमुभयं कर्म कुर्वन्ति। सर्वोच्चकोटिकजीवन्मुक्ता आत्मनो यत्पूर्णत्वेन निस्पृहाः सन्ति अशुभकर्मणस्तत्राभावो भवति अथ च ये शुक्लकर्म अपि कुर्वन्ति, ते कर्मफलभावनातो रहिताः सन्तः क्रियमाणकर्मभ्यः अशुक्लाः भवन्ति। अनेन प्रकारेण एतत् कर्मराशिः अशुक्लम् अकृष्णं च भवति। प्रथमत्रिभिः कर्मभिः

1. जातकपारिजाते आयुर्दायाध्याये श्लो.सं.-35-39
2. छान्दोग्योपनिषद् 5.10.7
3. सां.का.सू.सं.-13
4. सां.का.सू.सं.-13

फलोत्पत्तिर्भवति। अशुक्ल-अकृष्ण कर्मणः फलन्न भवति। व्यक्तिः स्वयं कृतस्य फलं शीघ्रं प्राप्नुयादिति नावश्यकमपितु निकटभविष्यतः जन्मजन्मान्तरं यावत् कदापि फलोन्मुखी भवितुमर्हति। कर्तुः कर्मक्षयः फलोपभोगं विना न भत्रति। इत्थं भोगेनैव कर्मक्षयः एवं तस्य फलदानावधेरनिश्चितत्वात् सर्वैः भारतीयदार्शनिकैः मध्यवर्तीव्यापारस्य कल्पना कृता। योगशास्त्रे एतत् कर्माशयत्वेनाभिधीयते। अन्येषु दर्शनेषु एतददृष्टापूर्वाश्रवाविज्ञप्त्यादिनाम्नाऽभिहितम्। कर्माशयपदार्थस्तु कर्मजनितशुभाशुभसंस्कारः। कर्म तु क्षणिकं परञ्च तदुत्पन्नसंस्कारः स्वफलदानं यावत् स्थिरं तिष्ठति। संस्कारश्चित्तभूम्यां तिष्ठति। संस्काराणामेषा प्रसुप्तावस्था भवति। संस्कारस्तु स्वोच्चावस्थायां फलदायको भवति। श्रेष्ठनिन्द्यकर्मभिस्त्रिधाफलप्राप्तिर्भवति। यथा-

**सति मूले तद्विपाको जात्यायुर्भोगाः।**[1]

जात्यायुर्भोगश्च कर्मणः फलं भवति। जातिपदेन मनुष्यपश्वादियोनीनां जन्मावगम्यते। निर्धारितावधिर्यावद्देहप्राणयोः संयोग एवायुरस्ति। सुखदुःखानुभूतिर्भोगः। जीवाः स्वकृतकर्मानुसारं सुखदुःखभोगं तदैव कर्तुं शक्नुवन्ति यदा तेषामायुः शिष्टं भवेत्। जीवः तदैवायुषं धारयति यदा तस्य जन्म स्यात्। इत्थं कर्मजन्यफलत्रयं परस्परं सम्बद्धम्। अतो अल्पायुर्दीर्घायुषी च कृतपुण्यकर्मप्रभावात्प्राप्येते।

---

1. योगसूत्रम् 2.13

# श्रीमद्भागवतवर्णितश्रीकृष्णचरितस्य समाजशास्त्रीयमध्ययनम्

डॉ.गौरीनाथरायः

श्रीमद्भागवतमहापुराणे वर्णितस्य वासुदेवश्रीकृष्णचरितस्य समाजशास्त्रीयविषयवस्तुविवेचन-दृशा विशिष्टं महत्त्वं विद्यते। विगतशताब्द्यां बहुभिः प्राच्यपाश्चात्यमनीषिभिः समाजविषयकं स्वकीयं चिन्तनं विशदरूपेण प्रस्तुतम्, तत्र अगस्तकाम्टप्रभृतिभिर्मनीषिभिः समाजविषयकं हि चिन्तनं प्रस्तुतं यत् खलु समाजशास्त्रमिति नाम्ना प्रख्यातमभूत्।[1] अस्मिन् नूतने शास्त्रे येषां विषयाणां विवेचनं विधीयते तेषां विवेचनं प्राचीनैर्मनीषिभिः प्रायशो धर्मशास्त्राङ्गत्वेन क्रियते स्म। परन्तु धर्मशास्त्रदृशा कृतैर्विवेचनैः समाजशास्त्रीयविषयविवेचनं पूर्णतया तु नैव समाहितं भवति, यतो हि धर्मशास्त्रात् समाजशास्त्रं बहुधा वैभिन्यं रक्षति।[2] अत्र प्रसङ्गे भारतीयसंस्कृतौ व्याप्तस्यावतारवादस्य समाजशास्त्रदृशा विमर्शः कृतस्तथा भागवतीयकथानकस्य विमर्शः प्रस्तुतोऽस्ति। समाजशास्त्रस्य परिचयप्रसङ्गे प्रकाशिता यत् नूतनस्यास्य शास्त्रस्य विवेचनसरणी नवीना वर्तते। सामाजिकविषयानां विवेचनं परिवारसंस्था-विवाहसंस्था-प्रभृतिनामकानां समाजशास्त्रीयाङ्गानां विवेचनमाध्यमेन क्रियते। एतत् समाजशास्त्राख्यं नवीनं शास्त्रमाश्रित्य यद् श्रीमद्भागवतवर्णितस्य श्रीकृष्णचरितस्य विवेचनं विधीयते तदा ज्ञायते यद्धि श्रीमद्भागवतोक्तासु श्रीकृष्णलीलासु समाजशास्त्रीया परिवारसंस्था, विवाहसंस्था, राजसंस्था च विशदरूपेण चर्चिताः सन्ति।

श्रीमद्भागवते वासुदेवदेवकीपुत्ररूपेण गृहीतजनुषः कृष्णनामकस्य बालस्य पालनपोषणादिकं व्रजप्रदेशे यशोदानन्दनामकदम्पत्या कृतमिति वर्णनेन भागवतरचनाकाले समाजे व्याप्तस्य सौहार्दस्य मैत्रीभावस्य वा सम्यक् परिचयः प्राप्यते। अस्मिन् प्रसङ्गे समाजशास्त्रीयायाः परिवारसंस्थायाः तात्कालिकं स्वरूपमपि परिचीयते। तस्मिन् युगे सामूहिकपरिवारव्यवस्थाऽऽसीत्। सौहार्दवशात् मित्राणां सन्ततिरपि जनैः स्वसन्ततिवदेव पाल्यते स्म। मित्रशिशोः कृष्णस्य पूतनातृणावर्तादिभिः कृतेऽपकारे यशोदानन्दौ जननीजनकवदेव पीडामन्वभवताम्। कृष्णस्य बाललीलासु गोपबालानां संगठनस्य सामूहिकप्रयासानाञ्च महत्त्वं प्रकाशते। रासलीलावर्णने स्त्रीसम्मेलनानां समायोजनस्य समाजशास्त्रीयं महत्त्वं परिचीयते। कैश्चन विद्वद्भिः प्रकाशितं यद्धि वासुदेवश्रीकृष्णस्य रासलीला तदीयां कामुकतां प्रकाशयति।[3] अपरैः कैश्चन हनुमानप्रसादपौद्दारप्रभृतिभिस्तु भारतीयसंस्कृतिपरिशीलनपरैस्तत्र वासुदेवश्रीकृष्णस्य चरित्रे

1. द्र. डॉ. मिश्रा के.के. समाजशास्त्र के मूल तत्त्व पृ. 1
2. द्र. डॉ. शर्मा जवाहरलाल – श्रीमद्भागवत का सांस्कृति अध्ययन पृ. 148
3. डॉ. जवाहरलालशर्मा – श्रीमद्भागवत का संस्कृतिक अध्ययन पृ. 208

कामुकताविषयकाक्षेपो निरस्तः।[4] तैः प्रकाशितं यद्धि कृष्णस्य वयो द्वादशवर्षपरिमितमेवासीत् यदा रासलीला जाताऽतोहि कामुकताया अभावो ज्ञायते। हनुमान् प्रसादपोद्दारप्रभृतीनां मतं समुचितं प्रतिभाति। तथा च व्यापकविवेचनेन रासलीलाविषये विज्ञायते यत् खलु पूतनावधादिकार्याणीव गोपीभिः सह कृता रासलीलापि वासुदेवश्रीकृष्णस्य समाजोद्धारप्रियत्वं निर्दिशति।

वासुदेवकृष्णस्य शैशवावस्थायाः व्रजनिवासस्य च समाजशास्त्रीयं विवेचनं कंसवधादीनां श्रीकृष्णकार्याणां विमर्शनावसरे चर्चितं यद्धि तत्र श्रीमद्भागवते कंस–जरासन्ध–भौमासुरादीनां दुर्दान्तत्वं प्रजापीडनकरत्वं वर्णितं तेषां परिचीयते। वर्तमानयुगे बहुभिःसमीक्षकैः कंसादिवधरूपस्य वासुदेवकर्मणः प्रशंसनं कुर्वद्भिर्वासुदेवः श्रीकृष्णः समाजकण्टकोन्मूलनपरः स्त्रीजनसम्मानसंरक्षकश्च प्रतिपादितोऽस्ति।[5] श्रीकृष्णस्य विवाहानां विमर्शनावसरे तत्र श्रीमद्भागवते रुक्मिणीप्रभृतिभिः अष्टाभिः स्त्रीभिस्सह श्रीकृष्णस्य विवाहसम्बन्धो वर्णितोऽस्ति। रुक्मिण्या सह कृष्णस्य विवाहो राक्षसविधिनाऽभूदिति भागवते वर्णितमस्ति। वस्तुतः समाजशास्त्रिणो रुक्मिणीहरणं राक्षसकर्मत्वेन न स्वीकुर्वन्ति यतो हि रुक्मिणीहरणं तु रुक्मिणीयोजनानुसारं जातम्।[6] जाम्बवत्याः सत्यभामायाश्च कृष्णं प्रति विवाहात् पूर्वं रागविशेषो भागवतादिषु नैव वर्णितोऽस्ति। तयोः पितृभ्यां स्वापराधपरिमार्जनार्थं वासुदेवाय श्रीकृष्णाय कन्याप्रदानं कृतम्। कालिन्द्याश्च वासुदेवकृष्णं प्रति रागातिशयस्य वर्णनं प्राप्यते। तस्या विवाहस्तु गान्धर्वविधिना जात इति परिचीयते। मित्रविन्दाया अपि रुक्मिणीवदेव स्वयंवर–सभातो हरणं वासुदेवेन कृतम् इति वर्णितम्। परन्तु तस्याश्चापि कृष्णं प्रति पूर्वरागस्य वर्णनात् राक्षसविधिर्न प्रकल्पनीयः। नाग्नजित्याः परिणयस्तु सप्तवृषभपराजयरूपं नाग्नजितीजनकस्य पणं पूरयित्वा वासुदेवकृष्णो व्यधात्। भद्रायाः परिणयः तस्याः मातुः भ्रात्रोश्च सहमतिम् अनुसृत्य कृष्णेन कृतः। लक्ष्मणायाः परिणयस्तु बाहुबलप्रदर्शनपूर्वकं कृष्णेन कृत इति परिचीयते।

श्रीकृष्णविहितस्य पाण्डवसाहाय्यस्य यदुकुलसंहारस्य च समाजशास्त्रानुसारी विमर्शः श्रीमद्भागवतवर्णनानुसारेण युधिष्ठिरादीनां पाण्डवानां कृष्णेन कृतस्य साहाय्यस्य कारणं तेषां धर्मव्यवस्थापालकत्वमासीदिति परिचीयते। तथा च भागवतवर्णितं पाण्डवानां कृष्णसाहाय्यं समाजशास्त्रदृशा महत्त्वपूर्णमस्तीति परिज्ञायते। बलोन्मत्तानां यादवानां विनाशार्थं वासुदेवश्रीकृष्णेन विप्रशापानुसरणं यद्धि स्वीकृतं तेन स्वपारिवारिकजनानामपि दुष्टता समाजसमुद्धारकेण नोपेक्षितेति सिद्ध्यति।[7]

विवाहसंस्थादृष्ट्या श्रीकृष्णचरितस्य विमर्शनावसरे हिन्दूधर्मशास्त्रे प्रोक्तानां विवाहप्रकाराणां तथा च विवाहसंस्कारमहत्त्वस्य विमर्शनपूर्वकं कृष्णविवाहानां परिचयः प्रकाशितः। भौमापहृतानां नृपकन्यानां समुद्धारं कृत्वा तासां स्वपत्नीरूपेण समुद्घोषणा कृष्णेन कृतेतिवर्णनं विवाहसंस्थायाः

4. श्रीहनुमानप्रसादपौद्दार – श्रीराधा माधव चिन्तन पृ. 72
5. डॉ. किरण टण्डन – संस्कृत साहित्य में राजनीति श्रीकृष्ण और चाणक्य के सन्दर्भ में पृ. 45
6. श्रीमद्भागवतमहापुराण 10.
7. श्रीमद्भागवतमहापुराण 10 स्कन्ध

समाजे महत्त्वं सूचयति।[8] तासां परिग्रहे रमणेच्छा प्रजोत्पादनं वा हेतुर्नैवासीत्। म.म. बालशास्त्रि-हरदासमतानुसारेण षोडशसहस्रसंख्याकानां स्त्रीणां स्वपत्नीरूपेण समुद्घोषणं समाजे तासां सम्मानसंरक्षणस्य साधनमासीत्। हिन्दूधर्मशास्त्रानुसारेण पतिनिर्विहितस्य यज्ञादिकर्मणः फलं तेषां पत्न्योऽपि प्राप्नुवन्ति, अत एव यज्ञफलप्राप्तये तासां विवाहस्यापेक्षा भवति। एवं प्रकारेण तस्मिन् युगे विवाहसंस्थायाः महत्ता परिचीयते। तदर्थं वासुदेवकृष्णेन भौमासुरकारागारात् मुक्तानां षोडशसहस्रस्त्रीणां कृतः। एतस्य षोडशसहस्रस्त्री परिग्रहस्य मूले वासुदेवश्रीकृष्णस्य दलितोद्धारविषयिणी सद्भावनैव हेतुरासीत्।[9]

वर्णव्यवस्थादृष्ट्या श्रीकृष्णचरितस्य विमर्शनावसरे विज्ञातं यत् खलु वासुदेवकृष्णो यदुकुलजन्मवशात् क्षत्रियत्वं भजते स्म तथा च गोपालेन नन्देन स्वपुत्रतया पालनात् वैश्यत्वं भजते स्म। तथा च क्षत्रियवैश्ययोर्वर्णयोः समाजे समानता विज्ञायते। गोवर्धनधारणलीलाप्रसङ्गे श्रीकृष्णेन चाण्डालस्यापि सम्मानः कृतस्तेन ज्ञायते यद्धि तस्मिन् युगे सर्वेषां वर्णानां समानं महत्त्वमासीत्।[10] तस्मिन् युगे सर्वेऽपि सामाजिकाः स्वं स्वं वर्णविशेषमाश्रित्य निर्धारितानां कर्तव्यानां पालनं कुर्वन्ति स्म। वर्णपरिवर्तनमपि तस्मिन् युगे प्रवर्तते स्म, यथा हि क्षत्रियेण विश्वामित्रेण ब्रह्मज्ञानप्राप्तिकामना-प्रकर्षात् तपः पूर्वकं ब्रह्मर्षिपदं प्राप्तम्। क्षत्रियस्य ऋषभदेवस्य सर्वेऽपि पुत्राः प्रजापालनात्मकं क्षत्रियधर्मं नैव स्वीकृतवन्तः। कविहरिप्रभृतयो नव पुत्रास्तु ज्ञानप्रचारणे संलग्ना बभूवुः वर्णव्यवस्थायाः स्वरूपं गुणकर्मानुसारं निर्धार्यते स्म।[11] चातुर्वर्ण्यबहिर्भूतानां किरातादीनामपि ब्रह्मज्ञानप्राप्तौ ज्ञानप्रसारे चाधिकारः आसीदितिभागवत- रचनाकारमतविवेचनेन ज्ञायते।[12] न केवलं जन्म वर्णव्यस्थायाः कारणं मन्यते स्म। भागवतस्य द्वादशस्कन्धे वर्णव्यवस्थायाः जीर्णता कालक्रमेण व्यजायतेति निर्दिष्टमस्ति। श्रीकृष्णचरितस्य आश्रमव्यवस्थादृष्ट्या विमर्शनावसरे विज्ञातं यत् खलु ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्याससंज्ञकानां चतुर्णाम् आश्रमाणां समुत्पत्तिः परमेश्वरात् जाता। गृहस्थाश्रमः सर्वेषामाश्रमाणामाधारोऽस्ति यतोहि ब्रह्मचारिणो वानप्रस्थाः संन्यासिनश्च गृहस्थादेव भिक्षां प्राप्य जीवनं धारयन्ति।। तस्मिन् युगे वानप्रस्थाश्रमप्रवेशो नानिवार्यत्वेन वर्णितोऽस्ति। कृष्णेन भागवतस्य एकादशे स्कन्धे प्रोक्तमस्ति-

**तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत्।**[13]

अत एव संन्यासाश्रम-प्रवेश-विषये कृष्णेन मित्रवर्याय उद्धवाय समुपदिष्टम्-

**यदा कर्म-विपाकेषु लोकेषु निरयात्मसु।**[14]

8. डॉ. अब्बास अली के ताई - हिन्दी काव्य में कृष्ण के विविध रूप पृ. 74-75
9. तत्रैव
10. रविन्द्रनाथमुकर्जी - भारतीय सामाजिक संस्थाएँ - पृ. 73
11. श्रीमद्भागवतम् - 5.4.11
12. श्रीमद्भागवतम् - 2.4.18
13. श्रीमद्भागवतम् - 11.18.1-8
14. श्रीमद्भागवतम् - 11.18.13-18

**दृष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे।**
**अग्नीन्स्वप्राण आवेश्य निरपेक्षः परिव्रजेत्॥**

समाजशास्त्रिणः संन्यासाश्रममहत्त्वविषये प्रकाशितवन्तो यद्धि संन्यासी तीर्थादिषु विभिन्नेषु स्थलेषु परिभ्रमति गृहस्थजनानां समक्षं देशान्तराणाम् आचारान् सूचयति। तेन हि समाजो देशान्तराणाम् आचारव्यवहाराणां ज्ञानं प्राप्नोति। संन्यासिनः कपटवैररागद्वेषविहीनाः भवन्ति, तेन हेतुना तेषां सदुपदेशाः समाजसम्मान्याः भवन्ति।

अत्र प्रसङ्गे चर्चितं यद्धि गृहस्थाश्रमिणो जनस्य कर्तव्यरूपेण निर्दिष्टानां ब्रह्मपितृनृवलिवैश्वसंज्ञकानां पञ्चानां यज्ञानां वासुदेवचरितवर्णनमाध्यमेन विमर्शनं कुर्वाणैः समाजशास्त्रिभिः प्रकाशितं यत् खलु वासुदेवकृष्णस्य चरितमाश्रमव्यवस्थायाः स्वरूपं सम्यक् सूचयति। आश्रमव्यवस्थापि वर्णव्यवस्थावदेव कलियुगे कालक्रमेण क्षीणतां प्राप्नोतीति भागवतस्य द्वादशस्कन्धे निर्दिष्टमस्ति।

राजव्यवस्थादृष्ट्या श्रीकृष्णचरितस्य विमर्शनावसरे विज्ञातं यत् खलु श्रीकृष्णजन्मसमये भारतदेशे प्रजापीडकानां राज्ञां दुर्व्यवहारेण सामाजिकाः त्रस्ता आसन्। कंसेन स्वश्वसुरस्य जरासन्धस्य आश्रयं प्राप्य मथुराजनपदाधीशपदं स्वयमेव समाक्रान्तं तथा च निजजनकस्य उग्रसेनस्य कारागारे पातनं कृतम्। तेन विज्ञायते यत् खलु मदान्धजनाः राज्याधिकारलोभवशात् जनकसम्मानमपि नैव स्वीकुर्वन्ति स्म। राजानः स्वभगिन्याः स्वकन्यायाः वा विवाहप्रसङ्गे बहुमूल्यान् बहुविधान् पदार्थान् यौतकरूपेण ददति स्म, यथाहि देवक्या विवाहे कंसेन विपुलो धनराशिर्व्ययीकृतः। मदान्धजनाः प्रजाभावनामुपेक्ष्य स्वार्थसाधनायै प्रवर्तन्ते स्म, यथा हि कंसो वसुदेवदेवक्योः विवाहानन्तरं तयोः पुत्रात् स्वमृत्युभयं ज्ञात्वा तौ कारागारे निपातितवान् कारागारपातने वासुदेवस्य त्वपराधो नैव निर्दिष्टोऽस्ति, तेन विज्ञायते यद्धि राजानः स्वेच्छाचारिणः आसन्।[15] तदानीं मथुरासमीपस्थितानां राज्यानामपि शासकाः प्रायशः स्वपरिवारपोषणरताः सैन्यसम्पदापरिवर्धनव्यग्राश्चासन्। भागवतकारवचनानुसारेण प्रजापीडकाः शासकाः भूभारभूताः भवन्ति। वासुदेवकृष्णेन तेषां भूभारभूतानां नृपाणां विनाशाय यथाशक्ति प्रयत्नाः कृताः। वासुदेवकृष्णो बहुदूरवर्तिनं प्राग्ज्योतिषपुराधीशं तस्य दुराचारमाश्रित्य हतवान्निति निर्देशेन विज्ञायते यत् खलु समाजहितसाधकाः महापुरुषाः दूरवर्तिनमपि दुराचारिणं न सहन्ते स्म।

धर्मव्यवस्थादृष्ट्या वासुदेवकृष्णस्य चरित्रं सर्वप्रथमं पौराणिकवाङ्मयस्य चर्चितस्य धर्मतत्त्वस्य समाजशास्त्रदृशा हि विवेचनम् प्रस्तुतम्। भागवतवर्णनानुसारेण धर्मशब्देन कर्तव्यकर्मणां निर्देशो विधीयते। ततो हि मनुस्मृतावपि प्रोक्तमस्ति–

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**[16]
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥**

15. श्रीमद्भागवतम् 10 स्कन्ध
16. मनुस्मृति - 6.9

वासुदेवश्रीकृष्णस्य चरिते मनुप्रोक्तं धृत्यादिधर्मलक्षणं सम्यक् परिचेतुं शक्यते। भागवतानुसारेण धर्मरक्षोपायानां विमर्शनावसरे धर्मस्य मूलं निम्नलिखितमनुस्मृतिमनुसृत्य विवेचितम्–

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**[17]
**एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्॥**

वासुदेवकृष्णस्य चरित्रं सदाचारः इति नाम्ना विज्ञायते। सोऽयं सदाचाररूपो धर्मो वेदो स्मृतीनतिक्रमते। तस्मिन् युगे कंसजरासन्धप्रभृतयो राजानः सदाचारविरोधीनि कार्याणि कुर्वन्ति स्म। तेषां वधेन हि वासुदेवकृष्णो धर्मरक्षां कृतवानिति परिचीयते। कामुकतावशाल्लोभवशाद् वा बह्वीः नारीः प्राग्ज्योतिषपुराधीशो भौमो निगडितवान्। तादृशं कदाचारं वासुदेवकृष्णो नैव सहते स्म, तेन हेतुना तस्य दुष्टस्य संहारं कृत्वा स्त्रीसम्मानरक्षार्थं स वासुदेवकृष्णो तासां स्वपत्नीत्वं घोषितवान्।

श्रीकृष्णोपदेशानां विमर्शनावसरे विज्ञातं यत् खलु श्रीमद्भगवद्गीतेति नामकं ग्रन्थरत्नं वासुदेवकृष्णस्य समुपदेशेषु विशिष्टं महत्त्वं भजते। श्रीमद्भागवतेऽपि महाभारतवदेव वासुदेवश्रीकृष्णस्य कर्मवादपरिपोषकः परिलक्ष्यते। गोवर्धनधारणेन परिचीयते यत् खलु कृष्णमते कर्मैव सर्वनियामकं विद्यते। श्रीमद्भागवतमहापुराणे नारीभ्यः प्रदत्तस्य समुपदेशस्य चर्चा विस्तरेण प्राप्यते।[18] तत्र हि वर्णितं यत् खलु नग्नस्नानं देवहेलनात्मकं भवति तथा च समाजव्यवस्थादृशापि तदनुचितमेव।[19] स्त्रियस्तु पतीनां कार्येषु यज्ञादिषु सततं सहयोगिनीत्वं धारयेयुरिति कृष्णमतं ब्राह्मणीभ्यो दत्तेन कृष्णोपदेशेन विज्ञायते। यदि नार्यो गृहात् बहिर्गत्वा स्वेष्टदेवतां पूजयन्ति तदा तु परिवारे विक्षोभो भवति। वासुदेवस्य सदुपदेशेषु मोक्षनामकस्य पुरुषार्थस्य प्राप्तिः प्रामुख्येन चर्चितास्ति।[20] अस्याध्यायस्य कलियुगीयधर्मव्यवस्थायाः विवेचनावसरे प्रकाशितं यत् खलु केचन धर्माः त्रिकालाबाधिता भवन्ति। तेषां सनातनत्वं विज्ञायते। केचन धर्मास्तु कालसापेक्षा भवन्ति। समयविशेषे तेषां युगधर्माणां परिपालनं भवेदिति प्रयतितव्यम्।[21]

भागवतोक्तस्य कृष्णचरितस्य काव्येषु समालोचितमस्ति तत्र महाभारते शिशुपालवधमहाकाव्ये, दशावतारचरितमहाकाव्ये भारतमञ्जर्याख्ये महाकाव्ये, युधिष्ठिरविजयमहाकाव्ये, राघवपाण्डवीयमित्याख्ये महाकाव्ये, श्रीकृष्णविजयमहाकाव्ये, रुक्मिणीकल्याणमहाकाव्ये, कंसवधमहाकाव्ये राघवयादवीयमहाकाव्ये, भीष्मचरितमहाकाव्ये च वर्णितं श्रीकृष्णस्य चरितं तस्य समाजोद्धारकत्वं निर्दिशति। महाभारताख्ये काव्येऽपि वासुदेवकृष्णस्य पाण्डवसहायकत्वं वर्णयता वेदव्यासेन तस्य धर्मसंस्थापकत्वं प्रतिपादितमस्ति। शिशुपालवधमहाकाव्यस्य समस्तं कथावस्तु समाजविद्रोहिविध्वंसनात्मकं विद्यते। अस्य महाकाव्यस्याङ्गिरसरूपेण वीररसो हि तथा च कृष्णस्य धर्मवीरत्वं विद्वद्भिरङ्गीक्रियते।

---

17. मनुस्मृति – 2.12
18. श्रीमद्भागवतम् – 10.23.31–32
19. श्रीमद्भागवतम् – 10.22.19
20. श्रीमद्भागवतम् – 11.11.1
21. डॉ. जवाहरलाल शर्मा – श्रीमद्भागवत का सांस्कृतिक अध्ययन, पृ. 4–5

अस्मिन् महाकाव्ये शिशुपालः समाजविद्रोहिणां प्रमुखस्तस्य वधं कर्तुं प्रवृत्तस्य वासुदेव श्रीकृष्णस्य समाजविद्रोहिविध्वंसनं प्रति समुत्साहो विभिन्नेषु सर्गेषु विशदरूपेण चर्चितोऽस्ति। एवमेव कविवरक्षेमेन्द्रविरचितस्य दशावतारचरितस्य अष्टमे सर्गे वासुदेवकृष्णस्य समाजोद्धारप्रवणता भागवतपुराणमनुसरति। एवमेव क्षेमेन्द्रविरचिते भारतमञ्जर्याख्यकाव्येऽपि यथाप्रसङ्गं कृष्णचरितवर्णनावसरे कविवरेण वासुदेवकृष्णस्य समाजोद्धारप्रवणत्वं सालङ्कारभाषाप्रयोगपूर्वकं प्रस्तुतमस्ति। माघक्षेमेन्द्रवदेव श्रीवासुदेवकविप्रभृतयः परवर्तिनो महाकाव्यरचयितारः स्वे-स्वे काव्ये विविधचरितवर्णनप्रसङ्गे तस्य श्रीकृष्णस्य समाजोद्धारप्रवणतां निर्दिष्टवन्तः।

संस्कृतभाषानिबद्धेषु गीतिकाव्येषु खण्डकाव्येषु च प्रकाशितं कृष्णस्य समाजोद्धारप्रवणत्वं विमृष्टमस्ति। प्रसङ्गेऽस्मिन् विवेचितं यत् खलु जयदेवकविना गीतगोविन्दनामके काव्ये श्रीकृष्णकृतानां दुष्टदलनादिकर्मणां चर्चा सरलया भाषाया कृताऽस्ति। गीतगोविन्दवदेव कृष्णकर्णामृतनामके खण्डकाव्ये श्रीकृष्णस्य शिष्यजनसंरक्षकत्वं कविवरेण लीलाशुकमहोदयेन समुचितविशेषणपूर्वकं प्रकाशितमस्ति। एवमेव नारायणभट्टविरचिते नारायणीयकाव्ये कृष्णसमाजोद्धारकत्वं सालंकारभाषाप्रयोगेण प्रस्तुतमस्ति। अस्मिन्नेव प्रसङ्गे विमृष्टं यद्धि विंशतितमायां शताब्द्यां मानवेदनामकेन कविवरेण कृष्णगीतिनामिकायां स्वकृतौ वासुदेवकृष्णस्य लोकोपकारकत्वं समाजोद्धारकत्वञ्च रसात्मकवाक्यप्रयोगपूर्वकं प्रकाशितमस्ति। अध्यायस्य तृतीयाधिकरणे संस्कृतचम्पूकाव्येषु वर्णितस्य श्रीकृष्णस्य समाजोद्धारकत्वस्य विमर्शनावसरे चर्चितं यत् खलु गोपालचम्प्वाम् आनन्दवृन्दावनचम्प्वाम् च वासुदेवकृष्णस्य समाजोद्धारप्रवणता विस्तरेण विवेचिताऽस्ति। तत्र चम्पूकाव्ये छन्दोबद्धा पदावली तथा च छन्दो विरहिता गद्यमयी पदावली समानचमत्कारो विद्यते, अत्र हि श्रीकृष्णस्य दुष्टजनसंहारकत्वं लोकहितसाधकत्वञ्च वर्णितमस्ति। गोपालचम्पूकाव्यस्य वैशिष्ट्यं विवेचयन्त्या रेणुबालामहोदयया प्रकाशितं यत् खलु श्रीकृष्णचरित्रं विकाशशीलस्य समृद्धस्य च समाजस्य चित्रणं प्रस्तौति। अस्यां कृष्णचरित्रचित्रणप्राधानायां चम्पूकाव्यपरम्परायां रामरायमहोदयेन विरचितं रूक्मिणीपरिणयचम्पूकाव्यमपि विशिष्टं महत्त्वं भजते। तत्रापि कविवरेण वासुदेवश्रीकृष्णस्य समाजोद्धारप्रवणता साम्यवादप्रसारप्रवणता च सालङ्करभाषाप्रयोगपूर्वकं प्रकाशिते स्तः।

दृश्यकाव्येषु चर्चितं वासुदेवकृष्णचरित्रं विमृष्टम्। प्रसङ्गेऽस्मिन् विज्ञातं यत् खलु भासकविविरचिते बालचरित्रनाटके वासुदेवश्रीकृष्णस्य समाजहितावहानि कार्याणि चमत्कारपूर्णभाषया प्रकाशितानि। भासेन विरचिते दूतवाक्यनामके नाटकेऽपि वासुदेवकृष्णस्य गुणगानं विस्तरेण प्राप्यते। तत्र तु वासुदेवकृष्णेन योगबलप्रकाशनं दुष्टदुर्योधन-गर्वविध्वंसनार्थं कृतमिति कविना वर्णितमस्ति।

सप्तमशताब्दीस्थितेन भट्टनारायणमहोदयेन विरचिते वेणीसंहारनामके लोकप्रसिद्धे नाटकेऽपि वासुदेवश्रीकृष्णस्य स्त्रीसम्मानरक्षाप्रवणता मुख्यरूपेण प्रकाशिताऽस्ति। अस्य नाटकस्यारम्भः कृष्णविहितस्य दौत्यकर्मणश्चर्चयैव जायते। तत्र चतुर्दशशताब्दीस्थितेन कारयित्री-भावयित्री-प्रतिभाधनिना रूपगोस्वामि-

महोदयेन विरचिते ललितमाधवनाटकेऽपि वासुदेवकृष्णस्य लोकोपकारप्रवणता विशदं विज्ञायते। एवमेव षोडशशताब्दीस्थितेन मधुसूदनसरस्वतीमहोदयेन रचिते कृष्णकुतूहलनाटके वासुदेवश्रीकृष्णस्य समाजोद्धारप्रवणता सम्यक्तया प्रतिपादिता।

एवं प्रकारेण सुविस्तृतस्य संस्कृतवाङ्मयस्य पर्यालोचनेन परिचीयते यत्खलु श्रीमद्भागवते वर्णितं श्रीकृष्णचरित्रं समाजशास्त्रीयविषयविवेचनदृशा सातिशयं महत्त्वं भजते। तदनुसृत्य परवर्तिभिर्बहुभिः संस्कृतसुकविभिः श्रीकृष्णस्य समाजोद्धारप्रवणता विविधरूपेण वर्णिता। इत्थं सिध्यति यदिह श्रीमद्भागवतमहापुराणमनुसृत्य श्रीकृष्णः समाजोद्धारको बभूव।

**सन्दर्भग्रन्थसूची**


1. समाजशास्त्र के मूल तत्त्व - डॉ. के.के.मिश्रा, मिनाक्षी प्रकाशन, मेरठ
2. श्रीमद्भागवत का संस्कृतिक अध्ययन - डॉ. जवाहरलाल शर्मा, राजस्थान हिन्दी ग्रन्थ आकदमी 7.26.2 विद्यालय मार्ग जयपुर।
3. श्रीराधामाधव चिन्तन - कृष्णकुमार प्रसाद पौद्दार, गीता प्रेस, गोरखपुर
4. संस्कृत साहित्य में राजनीति : श्रीकृष्ण और चाणक्य के सन्दर्भ में- डॉ. किरण टण्डन ईस्टन बुक लिंकर्स, 4825 यू. चन्द्रावल, जवाहर नगर, दिल्ली
5. श्रीमद्भागवतमहापुराणम् - वेदव्यास, चौखम्भा प्रकाशन, वाराणसी
6. हिन्दी काव्य में श्रीकृष्ण के विविध रूप - डॉ. अब्बास अली के ताई, शान्ति प्रकाशन, रोहतक, हरियाणा।
7. भारतीय सामाजिक संस्थाएं - प्रो. रविप्रकाश पाण्डेय, विजय प्रकाशन, वाराणसी, प्रथम, संस्करण 1989
8. मनुस्मृति - मोतीलाल बनारसीदास पब्लिशर्स प्रा.लि., बंगलो रोड जवाहर नगर, दिल्ली-07
9. भासनाटकचक्रम् - महाकवि भास - चौखम्बा विद्याभवन, वाराणसी, तृतीय संस्करणम् - 82
10. भीष्मचरितमहाकाव्यम् - डॉ. हरिनारायण दीक्षित, दिल्ली-7
11. महाभारतम् - वेदव्यास, वसंत श्रीपाद सातवलेकर, स्वध्याय माण्डल, पारडी।

# लक्ष्मणः सततं सत्पथे स्थितः-एकमध्ययनम्

डॉ.यम्.के.सुनीता

लक्ष्मणस्य रामानुज इति व्यपदेशः लोके सर्वत्र भ्राजते। तस्य च कारणं लक्ष्मणस्य सततं श्रीरामस्य अनुगामित्वमेव। श्रीरामस्य दर्शनं स्पर्शनं भाषणं इत्यादिकं विना लक्ष्मणः न स्थातुं शक्नोति। आबाल्यादपि इदमेव साहचर्यं श्रीरामलक्ष्मणयोः। तथैव शास्त्रकारा अपि साहचर्यस्य विषये श्रीरामलक्ष्मणौ एव उदाजह्रुः।

शब्दार्थस्य अनवच्छेदे सति अनवच्छिन्नस्य शब्दस्य अर्थावबोधः संयोगादिभिः निर्धार्यते[1]। तत्र रामलक्ष्मणौ इति प्रयोगे नानार्थकस्य शब्दस्य रामशब्दस्य दशरथस्य पुत्रः श्रीरामः इति विशेषार्थस्मृतिः साहचर्यात् निर्धार्यते।

वाल्मीकिरामायणेऽपि श्रीरामस्य प्रथमप्रवेशः यथा समुपकल्पितः तदानीं रामेण साकं लक्ष्मणोऽपि सह आयातः। विश्वामित्रे महर्षे यागरक्षणार्थं श्रीरामस्य अपेक्षाम् आवश्यकतां च ब्रुवति सत्यपि दशरथः श्रीरामं विश्वामित्रेण साकं प्रेषयितुं न शशाक। तदानीं कुलगुरौ वशिष्टे ब्रुवति सत्येव दशरथः सलक्ष्मणं रामम् आजुहाव। तच्चोक्तं वाल्मीकिना-

**तथा वशिष्टे ब्रुवति राजा दशरथः स्वयम्।**
**प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम्॥** इति I.22.1

सन्दर्भेस्मिऽन् सलक्ष्मणम् इति पदस्य तयोः अविनाभावज्ञानात् इति तिलकव्याख्याता कथयति। एवमेव अग्रे तच्च सौमित्रिरन्वगात्-

**विश्वामित्रो ययावग्रे ततो रामो महायशाः।**
**काकापक्षाधरो धन्वी तं च सौमित्रिरन्वगात्॥** इति I.22.6

विश्वामित्रेण यागरक्षणार्थं राम एव अपेक्षितः। तथापि लक्ष्मणः तमन्वगात्। तत्र च कारणं श्रीरामस्य साकं लक्ष्मणस्य तादात्म्यमेव। तच्च अधो विव्रियते-

**रामेति मधुरां वाणीं विश्वमित्रोऽभ्यभाषत।** I.22.12

इत्यादि स्थलेषु यो-योपदेशः राममुद्दिश्य कृतः। सस्सर्वोपि लक्ष्मणमपि सम्बुध्यैव प्रवर्तते। यथा-

---

1. संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती देशः कालोव्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ (का.प्र. II.19)

**गृहाण वत्स सलिलं मा भूत्कालस्य पर्ययः।**
**मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा॥** इति I.22.12,13

एवं रामम् उद्दिश्य एव उक्तमपि एतादृशं सर्वमपि साहचर्यात् लक्ष्मणमपि अन्वगच्छत्।

**कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते।**
**उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम्॥**

**तस्यार्षेः परमोदार वचः श्रुत्वा नरोत्तमौ।**
**स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम्॥** I.32.2,3

इत्येवमादिषु तयोः साहचर्यं सुस्पष्टम्, अतएव लक्ष्मणस्य रामानुज इति व्यपदेशः सुप्रशस्तो सम्बभूव। अतश्च लोके लक्ष्मणार्थद्योतकतया रामानुज इति व्यवहारः सुप्रसिद्धः। अतएव लक्ष्मणः वनवाससमयेऽपि राममन्वगात्। यद्यपि लक्ष्मणस्यापि वनवासगमने[1] प्रयोजनविशेषोप्यस्ति। तथापि रामानुगामित्वमेव मुख्यतः रामायणे सर्वत्र दरीदृश्यते।

**देशे देशे कलत्राणि देशे देशे च बान्धवाः।**
**तं तु देशं न पश्यामि तत्र भ्राता सहोदरः॥** VI.102.14

इत्येवं श्रीरामोऽपि लक्ष्मणस्य भ्रातृवैशिष्ट्यं प्रतिपादयति। लक्ष्मणः श्रीरामस्य सुखं श्रेयः इच्छतिस्म, तदतिरिक्तं तस्मै किमपि नापेक्षते, नवा रोचते। रामस्य सुखे तत् श्रेयसे च यद्यद् विरुद्धं तत्तत् सर्वमपि लक्ष्मणेन निरस्तमेव। श्रीरामपट्टाभिषेकस्य विरुद्धतया यत्कार्यजातं सम्पन्नं तत्तत् सर्वं दृष्ट्वा लक्ष्मणः नितान्तं खिन्नः, क्रुद्धश्चापि। पितरमपि श्रीरामस्य श्रेयसः विघ्नकारी इति विचिन्त्य तमपि दुर्बभाषे। सन्दर्भेऽस्मिन् वाल्मीकिरपि लक्ष्मणस्य नागेन्द्रत्वं, शेषत्वं स्मारयामास।

**सरोषमिव नागेन्द्रं रोषविस्फारितेक्षणम्।** II.22.1

**निशश्वास महासर्पो बिलस्थ इव रोषितः॥** II.23.2

इत्यादिना वाल्मीकेः एतादृशानि विशेषवर्णनानि लक्ष्मणस्य आदिशेषत्वं श्रीरामसहचरित्वं सुस्पष्टं व्यञ्जयन्ति। अतएव श्रीरामस्य लक्ष्मणे विशेषा प्रीतिः-

**अथ तं व्यथया दीनं सविशेषममर्षितम्।**
**आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम्॥** इति II.22.1,2

श्रीरामपट्टाभिषेकविरुद्धरूपकर्मणि पितरि दशरथे क्रुद्धः लक्ष्मणः, श्रीरामं अयोध्यां प्रति प्रतिनिवर्तयितुं समागच्छति भरते अपि अत्यन्तं क्रुद्धः उक्तवांश्च-

**अनुरूपाविमौ बाहू रामकर्म करिष्यतः।**
**अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे॥** II.23.39

---

1. कृतार्थोऽहं भविष्यामि तवचार्थ प्रकल्पने। II.31.24

यदि दुःस्थो न रक्षेत भरतो राज्यमुत्तमम्।
प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः॥

तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः।
तत्पक्षानपि तान् सर्वांस्त्रैलोक्यमपि किं तु सा॥ इति II.31.20,21

इत्यादिषु सन्दर्भेषु लक्ष्मणस्य यः आवेशः समुपवर्णिता सः श्रीरामस्य सुखश्रेयसोः विरुद्धासहिष्णुत्वरूप एव[1]। लक्ष्मणस्य भ्रातरि श्रीरामे संलग्नः यो आदरः यच्च तादात्म्यं या च प्रीतिः वाल्मीकिरामायणे दरीदृश्यतः तत्सर्वमपि अनुजानां सर्वेषाम् आदर्शप्रायं समजनि। भ्रातरि पितृसमानादरः यद्यपि शास्त्रेषु प्रतिपादितः लक्ष्यरूपेण न क्वापि तथा प्रसिद्धः यथा श्रीरामे लक्ष्मणस्य। श्रीरामे लक्ष्मणस्य तादृशमेव आदरं द्रढयति सुमित्रापि–

व्यसनी वा समृद्धो वा गतिरेष तवानघ।
एष लोके सतां धर्मो यज्ज्येष्टवशगो भवेत्॥

इदं हि वृत्तमुचितं कुलस्यास्य सनातनम्।
दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु हि॥

लक्ष्मणं त्वेवमुक्त्वासौ संसिद्धं प्रियराघवम्।
सुमित्रा गच्छ गच्छेति पुनः पुनरुवाच तम्॥

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्।
अयोध्यामटवीं विद्धि गच्छ तात यथासुखम्॥ इति II.40.6-9

न हि रामात् प्रियतरो ममास्ति भुवि कश्चन। II.86.5

लक्ष्मणस्य न केवलं भ्रातरि श्रीरामे पितृभावः, प्रजावत्यां सीतायामपि मातृभावः तथैव प्रसिद्धः। तस्य सीतायां प्रदर्शितस्य आदरस्य अत्युन्नतम् उदाहरणं लक्ष्मणस्य वचस्येव लभ्यते। यच्च बहुभिः लक्षणकारैरपि उदाहरणत्वेन प्रदर्शितम्।

नाऽहं जानामि केयूरे नाहं जानामि कुण्डले।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्॥

तथा च राज्यस्य श्रेयसि एव रामस्य श्रेयः इति चिन्तयतो लक्ष्मणस्य राज्यस्य राज्यप्रकृतिषु च महती श्रद्धा। अतश्च दुर्वाससः शापात् प्रकृतीनां क्षयः मा भूत् इति धिया, ज्ञात्वापि मरणं दण्डः।

---

1. तत एव सुग्रीवेऽपि क्रुद्धो लक्ष्मणः–
सत्त्वाभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः। कृतज्ञः सत्यवादी च राजा लोके महीयते॥
यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम्। मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः॥
शतमश्वानृते हन्ति सहस्रं तु गवानृते। आत्मानां स्वजनं हन्ति पुरुषः पुरुषानृते॥
पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः। कृतघ्नः सर्वभूतानां स स वध्यः प्लवगेश्वर॥ IV.34.7-10

इति, तथापि काल- श्रीरामयोः विविक्ते अर्हति रहि समावेशे अननुज्ञातोऽपि तत्रगतः, स्वात्मनि समर्पयति च।

**एकस्य मरणं मेऽस्तु मा भूत्सर्वविनाशनम्।**
**इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत्।।** इति VII.105.9

एवं सर्वलक्षणलक्षितः अनुजानां सर्वेषाः आदर्शप्रायः लक्ष्मणः श्रीरामेण एवम् अभिनन्दितः।

**स्निग्धो धर्मरतो धीरः सततं सत्पथे स्थित।**
**प्रियः प्राणसमो वश्यो विधेयश्च सखा च मे।।** इति II.30.10

रामानुजः लक्ष्मणः श्रीरामस्याज्ञावर्ती, श्रेयस्कामी च। रामकार्यार्थसिद्धये स्वजीवनमेवार्पयामास। श्रीरामस्याभ्युदयेऽवरोधकान् हन्तुमपि सः निश्शङ्कं प्रवर्ततेस्म इति परिशीलितम्।

अयोध्या पुनरागमनपर्यन्तं, श्रीरामेण लोकापवादतः सीतायाः परित्यागपर्यन्तं, लक्ष्मणस्वभावः अपेक्षामनुशृत्योग्र इत्यपि परिशीलितम्। सुमन्त्रात् श्रीविष्णवे भृगुशापवृत्तान्तस्य श्रवणानन्तरं लक्ष्मणः विधेः बलीयस्त्वम् अवगत्य, ततः प्रभृति श्रीराममपि धर्मे स्वकर्मणि प्रजापालने परिवर्तयितुं सन्दिशत्यपि। महायोगीव उदासीन इव व्यवहरति। विशेषतः दुर्वासगमनानन्तरसन्निवेशे लक्ष्मणः श्रीरामं-

**जहि मां सौम्य विश्रब्धं प्रतिज्ञां परिपालय।**
**हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः।।** इति VII.106.3

इति प्रतिज्ञां पालयितुम् आत्मनः हननाय श्रीरामं प्रेरयति। वसिष्ठादिमहर्षीणां सूचनानुसारं श्रीरामेण विसर्जये त्वां सौमित्र VII.106.13 इत्युक्तः लक्ष्मणः साक्षात् सरयूतीरमेव गत्वा प्रायोपवेशनेन[1] शरीरं मुमोच।

**'लक्ष्मणः एवं सततं सत्पथे स्थितः'**

**उपयुक्तग्रन्थसूची-**


1. काव्यप्रकाशः (वाक्यपदीयम्)
2. वाल्मीकिरामायणम्


---

1. रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः।
लक्ष्मणस्त्वरितं प्रत्यात् स्वगृहं न विवेश ह।।
स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः।
निगृह्य सर्वस्त्रोतांसि निःश्वासं न मुमोच ह।।
अनिःश्वसन्तं युक्तं तं सशक्राः साप्सरोगणाः।
देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा।।
अदृश्यं सर्वमनुजैः सशरीरं महाबलम्।
प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह।। VII.106.14&17

# संस्कृतगद्यकाव्यलेखनपरम्परायां शिवराजविजयः

श्रीरिंकेशभदूलाः

मानवस्य विचाराणाम् उत्पत्तिः वातावरणेन परिस्थितिभिश्च भवति, यान् स शब्दैः अभिव्यनक्ति। सामान्यजनः साधारणतया स्वविचारान् प्रकटयति। किन्तु कविः निजवैशिष्ट्येन प्रतिभया च स्वविचारान् एवंरूपेण प्रस्तौति, यत् तस्य प्रभावः श्रोतरि दर्शके पाठके वा वैलक्ष्येण भवति। तस्य शब्दचयने अद्‌भुतश्चमत्कारो भवति। कविः प्रजापतिः काव्यरूपिसंसारस्य कर्त्ता वर्तते। कवेः रुच्यनुकूलमेव तस्य सृष्टेः निर्माणं भवति। उक्तमपि अग्निपुराणे –

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथास्मै रोचते विश्वं तथैदं परिवर्तते।।**[1]

काव्यशब्दस्य सम्बन्धः कविशब्देन वर्त्तते। व्याकरणदृष्ट्या शब्दस्यास्य व्युत्पत्तिः एवं भवति–

**कवेरिदं कर्म भावो वा काव्यम्**

काव्यस्य स्वरूपं गद्यमयं पद्यमयं गद्य–पद्यमिश्रितञ्च भवति। एषु गद्यमेव प्रधानम्। यतोहि गद्यं मानवस्य प्रारम्भिकी भाषा विद्यते। मानवः बाल्यकाले प्रथमं गद्यमयभाषया एव विचारविनिमयं करोति। समाजे प्रायः सर्वे जनाः गद्यमयभाषया एव विचारान् सम्प्रेषयन्ति। समाजे सर्वे पद्यं रचयितुं न शक्नुवन्ति। यद्यपि सर्वं गद्यमपि काव्यं न भवति। काव्यं रचयितुं शक्तिः निपुणता एवञ्च अभ्यासः कवौ भवेत् तदैव सः सुष्ठु काव्यनिर्माणं कर्तुं शक्नोति। पद्यं पदमेकमपि चमत्करोति किन्तु गद्ये एवं न भवति। गद्यस्य प्रत्येकं शब्दः विशेषः स्यात् तदैव तद् काव्यं मन्यते। अनेनैव कारणेनोक्तं कुत्रचित्–

**गद्यं कवीनां निकषं वदन्ति।**[2]

मुख्यरूपेण काव्यं द्विविधं– 1) दृश्यकाव्यम् 2) श्रव्यकाव्यञ्च

दृश्यकाव्येषु रूपकाणि उपरूपकाणि च समायान्ति। एतानि अभिनेयानि भवन्ति। श्रव्यकाव्यस्य पठनेन श्रवणेन वा पाठकानां श्रोतॄणां च हृदि रसः सञ्चरति। श्रवणयोग्यं रसात्मकं काव्यं श्रव्यकाव्यं भवति। अस्य श्रव्यकाव्यस्य पद्यं गद्यं चम्पू चेति भेदत्रयम्। पद्यकाव्यं छन्दोबद्धं लययुक्तञ्च भवति। तद् त्रिविधम्–

---

1. अ0 पु0 336/10
2. समान्योक्तिः

1) महाकाव्यम् 2) खण्डकाव्यम् 3) उपकाव्यञ्च

चम्पूकाव्यं गद्य-पद्ययुक्तं भवति। गद्यकाव्यं पद्यकाव्यात् वैपरीत्यं वहति। अत्र छन्दोविधानं पदानां क्रमबद्धयोजना च न जायते। गद्यं चतुर्विधं भवति -

1) मुक्तकम् 2) वृत्तगन्धि 3) उत्कालिकाप्रायम् 4) चूर्णकञ्च

मुक्तके समासरहिता रचना क्रियते। वृत्तगन्धिनि कुत्रचित् वृत्तभागः समाविष्टो भवति। उत्कालिकायां दीर्घसमासरचना एवञ्च चूर्णके अल्पसमासरचना भवति। उक्तमपि साहित्यदर्पणे -

**वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च।**
**भवेदुत्कालिकाप्रायं चूर्णकञ्च चतुर्विधम्॥**
**आद्यं समासरहितं वृत्तभागयुतं परम्।**
**अन्यद्दीर्घ समासाढ्यं तुर्यञ्चाल्पसमासकम्॥**[1]

संस्कृतगद्यकाव्यस्य मुख्यरूपेण भेदद्वयं प्राचीनैः आलङ्कारिकैः मन्यते। तद् कथा आख्यायिका च। एतयोः भेदयोः निरूपणमग्निपुराणे, काव्यादर्शे, रुद्रटकृतकाव्यालङ्कारे, अमरकोशे, साहित्यदर्पणे, इत्यादिषु ग्रन्थेषु समुपलभ्यते। द्वयोः मध्ये भेदोऽयं वर्त्तते यत् ऐतिहासिकविषये आख्यायिका एवञ्च काल्पनिकविषये कथा भवति। इमौ भेदौ प्राचीनाचार्यैः उक्तौ। आधुनिकैः आचार्यैः इतोऽपि भेदाः कल्पिताः। यथा- निबन्धः, उपन्यासः, संस्मरणं, जीवनचरितम्, आत्मकथा, यात्रावृत्तं, रेखाचित्रमित्यादयः। एषु भेदेषु उपन्यासः प्रमुखं स्थानं भजते। यतोहि उपन्यासः वर्तमानकाले कथासाहित्यस्य अत्यधिकं लोकप्रिया नवीना च काव्यरीतिः वर्त्तते। अत्र गद्यबद्धकथानकमाध्यमेन मानवजीवनस्य समाजस्य च सर्वोत्तमा व्याख्या प्रस्तूयते। लेखकः प्रभावपूर्णशैलीमाध्यमेन स्वस्य एकं निश्चितं लोकोपकारकञ्च मतं प्रकटयति। उपन्यासस्य लक्षणमनेकैः आधुनिकैः काव्यशास्त्रज्ञैः उल्लिखितं श्रीमद्राधावल्लभत्रिपाठि-वर्येण स्वकाव्यशास्त्रीयग्रन्थे अभिनवकाव्यालङ्कारसूत्रे उपन्यासस्य लक्षणमेवमुक्तम्-

**गद्यबद्ध उपन्यासो महाकाव्यमयी कथा॥**[2]

उपन्यासे महाकाव्यमिव जीवनस्य सम्पूर्ण वृत्तमुपस्थाप्यते। उपन्यासे कथारम्भः, सङ्घर्षः आरोहः, अवसानं समाप्तिर्वा इति चतस्रः अवस्था भवन्ति। श्रीमदभिराजराजेन्द्रमिश्रेण उपन्यासस्य लक्षणमेवमुल्लिखितम् -

**कथाऽऽख्यायिकयोः कश्चिन्मिश्रभेदोऽपि साम्प्रतम्।**
**उपन्यास इति ख्यातो भाषान्तरप्रतिष्ठितः**[3]**॥**

---

1. साहित्यदर्पणम् 6/330-331
2. अभि0 3/1/13
3. अभिराजयशोभूषणम् 4/105

मिश्रमहाभागानुसारेण उपन्यासः कथाख्यायिकयोः मिश्रत्वेन कश्चित् नूतनो भेदः वर्तमाने प्रसिद्धः वर्तते। विशेषरूपेण संस्कृतेतरसाहित्येषु प्रसिद्धो भेदोऽयम्। अत्र कालखण्डविशेषस्य समग्रस्य जनजीवनस्य वर्णनं क्रियते। प्रो. रहसविहारीद्विवेदिमहाभागेनापि स्वकीये निबन्धसंग्रहे साहित्यविमर्शे अर्वाचीनकाव्यविधालक्षणानि इति निबन्धे उपन्यासस्य लक्षणमुल्लिखितम् –

**गद्यकाव्यबृहद्बन्ध उपन्यासोऽभिधीयते।**
**अस्मिन् युगोचितं वस्तु पात्रं कविसमीहितम्।।**
**देशकालोचितं चित्रं गद्यशिल्पं मनोहरम्।**
**कल्पितं चापि तत्सर्वं यथार्थं सत् प्रतीयते।।[1]**

संस्कृतसाहित्यस्य प्रथमोपन्यासः श्रीमदम्बिकादत्तव्यासेन विरचितः शिवराजविजयः वर्तते। अनेनैव गद्यकाव्येन अम्बिकादत्तव्यासस्य गणना प्रमुखगद्यकारेषु क्रियते। पुरातनपरम्परामपहाय तेन प्रणीतः 'शिवराजविजयः' स्वीयया मौलिकतया सुबोधतया च विद्वज्जनमनोग्राहितामबलम्बते। 'साहित्यचार्य' इत्युपाधिना विभूषितस्य पं. अम्बिकादत्तव्यासस्य पूर्वजाः राजस्थानप्रदेशस्य जयपुरमण्डलान्तर्गते धूलानामकस्य ग्रामस्य निवासिन आसन् इति विदुषां मतम्। पराशरगोत्रीयो यजुर्वेदीयस्त्रिप्रवरः पण्डितप्रवरो राजारामो धूलाग्रामं परित्यज्य काशीमाजगाम। तस्य द्वौ पुत्रौ आस्तां– दुर्गादत्तः देवीदत्तश्च। दुर्गादत्तस्यैव द्वितीयो पुत्रः अम्बिकादत्तव्यासः आसीत्। अम्बिकादत्तव्यासस्य जन्म 1915 विक्रमाब्दे अर्थात् 1858 ईसवीये वर्षे चैत्रशुक्लाष्टम्यां जयपुरे जातम्। तेन काश्यां शिक्षा प्राप्ता। 1880 ईसवीये वर्षे साहित्याचार्यपदवीमधिगतवान्। विहारप्रदेशे अनेकेषु स्थानेषु छात्रानध्यापयामास सः। 1900 खीष्टाब्दे काश्यां दिवङ्गतः। श्रीमदम्बिकादत्तव्यासेन सुरभारत्यामनेके ग्रन्था उपनिबद्धाः। तासु शिवराजविजयः प्रमुखः वर्तते। एतत् गद्यकाव्यमस्ति। अस्य ग्रन्थस्य महत्त्वमनेन अनुमातुं शक्यते यत् सुधीजनैः नैकेषां विश्वविद्यालयानां विभिन्नासु परीक्षासु पाठ्यग्रन्थरूपेण एष ग्रन्थः विनिर्धारितः। द्वादशनिःश्वासेषु निबद्धेऽस्मिन् गद्यकाव्ये त्रयः विरामाः सन्ति। अस्य कथानकमैतिहासिकं वर्तते। अत्र महाराष्ट्रसाम्राज्यस्य संस्थापकस्य मुगलशासनसमुत्पाटनपटोः शिवराजस्य चरित्रं समुपस्थापितमस्ति। पतन्त्यः परम्पराः, यवनानां दुराचारः, भारतीयानां सहिष्णुताः, निखिलमत्र चलचित्रमिव संशोभते।

**पात्रपरिचयः –**

शिवराजोऽत्र नायकः रघुवीरसिंहश्चोपनायकः। गौरसिंहः श्यामसिंहश्चात्र परिवेशप्रदर्शकौ। अवरङ्गजीबोऽत्र प्रतिनायकः। जयसिंहः स्वार्थलोलुपो भारतीयः। नायं स्वार्थमधिगच्छति, न वा देशवासिहृदयेषु स्थानम्। सौवर्णी कविकल्पनया अवतीर्णा भारतीया रमणी। रसनारी तु प्रतिनायकस्य पुत्री वाचा च पट्वी।

---

1. अर्वाचीनकाव्यविधालक्षणानि

**कथावस्तु -**

शिवराजविजयस्य कथावस्तु ऐतिहासिकं वर्तते। अस्य कथानकमितिहासप्रसिद्धस्य मुगलशासनसमुत्पाटनकुशलस्य महाराष्ट्रशिरोमणेः शिवराजस्य जीवनस्य दशवर्षाणां सङ्घर्षे आधारितं वर्तते। कथानकमस्य मातृभूमिं प्रति प्रेम्णा नृपस्य प्रजावत्सलतया, प्रजायाः राजभक्तिपरायणतया, धार्मिकतया, राष्ट्रीयभावनाभिश्च सुमिश्रितं (ओत-प्रोतं) विद्यते। ऐतिहासिकतायाः देशभक्तेः राजभक्तेः मातृभूमिभक्त्यादीनां भावानामस्मिन् नूतनविधायाः काव्ये सुन्दरः समन्वयं वर्तते।

**नायकविमर्शः -**

अस्य गद्यकाव्यस्य नायकः शिवराज एव विद्यते इत्यत्र नास्ति सन्देहलेशः। अस्य प्रमाणमिदं यत् श्रीमदम्बिकादत्तव्यासेन काव्यस्यास्य नाम **'शिवराजविजयः'** इति समुल्लिखितम्।

**भाषा-शैली -**

भाषा एव तद् साधनं वर्तते येन कश्चित् लेखकः स्वविचारान् भावान् च अभिव्यनक्ति। भावान् अभिव्यङ्क्तुं भाषायाः समुचितं ज्ञानं परमावश्यकं वर्तते। भाषाधिकारं विना कश्चिदपि लेखकः भावान् समुचितरूपेण अभिव्यङ्क्तुं न शक्नोति। शिवराजविजयेऽम्बिकादत्तव्यासस्य भाषा भावानुसारिणी विद्यते। करुणवर्णने समासाभावः दृश्यते। यथा -

क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचिद् दारा अपह्रियन्ते, क्वचिद् धनानि लुण्ठ्यन्ते, क्वचिदार्तनादाः, क्वचिद् रुधिरधाराः, क्वचिदग्निदाहः..................................। इति[1]

शृङ्गारे करुणे च वैदर्भीविलासः, भयानके रौद्रे च गौडीगम्भीरता दृश्यते। समासस्य अल्पप्रयोगः कृतः व्यासेन। समासेन भाषा सरसा सरला, सुबोधा, ओजस्विनी यथावसरं कोमला च दृश्यते। मधुरपदविन्यास एवञ्च क्लिष्टतायाः कृत्रिमतायाः चाभावेन शिवराजविजयः स्वाभाविकं सहजं सुन्दरं च गद्यकाव्यं वर्तते। प्रसादगुणस्य प्रयोगः भूयसा विद्यते। पात्राणां चरित्रं चित्रमिव सुस्पष्टतरं भाति। वातावरणदेशकालसंस्कृतिकुलशीलादिध्वनने शैली क्षमा अस्ति। नेयं बाणस्य इव समासविकटा न च सुबन्धोरिव प्रत्यक्षरश्लेषघना वर्तते। अलङ्करणविधानं नवीनं कल्पनाऽप्यभिनवा विद्यते।

**रसः -**

स्वाभाविकत्वेन काव्ये रससंचारः जायते। शिवराजविजये अम्बिकादत्तव्यासेन नैसर्गिकरूपेण रसास्वादसामग्री विहिता। शिवराजविजयः वीररसप्रधानं गद्यकाव्यं वर्तते। शृङ्गारकरुणादयश्चात्राङ्गभूताः सन्ति। युद्धादिप्रसङ्गे वीररसेन सह रौद्र-भयानक-वीभत्साद्भुतरसानां प्रयोगः कृतः। शृङ्गारादिवर्णने

---

1. शिवराजविजयः 1/1

अश्लीलत्वं न प्रतीयते। एवं वक्तुं शक्यते यत् काव्येऽस्मिन् नवरसानां प्रयोगः चारुत्वेन कुशलत्वेन च विहितः।

**अलङ्कारः-**

शिवराजविजये गद्यकाव्ये अनेके अलङ्काराः प्रयुक्ताः कविना। अलङ्कारान् प्रयोक्तुमधिकः परिश्रमः न कृतः व्यासेन, तेन स्वाभाविकतया प्रयुक्ता अलङ्काराः। गद्यकाव्येऽस्मिन् उपमा-रूपक-उत्प्रेक्षा-परिसंख्यानुप्रासादीनामलङ्काराणां प्रयोगः भूयसा विहितः। अनुप्रासस्य प्रयोगः दर्शनीयः -

''पूर्वतः परम-पवित्र-पानीयं परस्सहस्र-पुण्डरीक-पटल-परिलसितं पतत्रिकुल-कूजित-पूजितं पयःपूरितं सर आसीत्।''[1]

पं. अम्बिकादत्तव्यासेन स्वगद्यकाव्ये शिवराजविजये तत्कालीनायाः सामाजिकव्यवस्थायाः सुन्दरं चित्रं नवीनायां विधायां प्रस्तूय संस्कृतगद्यलेखने महत्त्वपूर्णं योगदानं कृतम्। गद्यकाव्यमेतत् चारुमय्यां भाषायां लिखितम्। काव्यमिदं बाणस्य कादम्बरीति कथया प्रभावितम्। कादम्बर्यां तिस्रः कथाः (वैशम्पायनस्य, कादम्बरी-चन्द्रापीडयोः, महाश्वेता-पुण्डरीकयोः) सहैव प्रवहति। तथैव अत्रापि शिवराजस्य रघुवीरसिंहस्य च कथे प्रचलतः। गद्यकाव्येऽस्मिन् सर्वाणि पात्राणि ऐतिहासिकानि सन्ति। अम्बिकादत्तव्यासस्य रचनाया अस्याः वैशिष्ट्यं वर्तते यत् तस्य कल्पना ऐतिहासिकघटनायां विकारं न जनयति, न वा घटनायाः वर्णनेन कुत्रचित् नीरसत्वं उत्पादयतीति। काव्यमिदं सहृदयानां हृदि सर्वत्रैव ह्लादं जनयति।

1. शिवराजविजयः 1/1

# शब्दार्थसम्बन्धविमर्शः

श्रीदीपकशर्मा

शब्दश्रवणानन्तरं कस्यचिद् तदर्थविशेषज्ञानम्भवति, कस्यचिन्न भवति। अतः शब्दस्य अर्थविशेषेण सह सम्बन्धोऽवश्यमेवाऽस्ति यस्य ज्ञानेनैव शाब्दबोधो भवतीति प्रतीयते।

शब्दार्थसम्बन्धे विद्वत्सु मतवैपरीत्यं दृश्यते। तत्र सिद्धान्तवादिनो मीमांसकाः शब्दार्थयोः सम्बन्धं स्वीकुर्वन्ति, तदस्वीकारे घटशब्दात् पटबोधापत्तेः। घटशब्दो घटस्यैव वाचकः बोधकश्चेति, स्वभावस्यास्य पदपदार्थयोः सम्बन्ध एव नियामको भवितुमर्हति। मीमांसकानाम्मते शक्ति-नामाभिधेयम्पदार्थान्तरमेव शब्दार्थयोः सम्बन्धत्वेन स्वीक्रियते।

नैयायिकाः 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याकारा 'इदं पदमिममर्थं बोधयतु' इत्याकारा वेश्वरेच्छा शक्तिः, तस्या एव विषयत्वलक्षणः सम्बन्धः पदेऽर्थे जन्यजनकभावे बोधे चेति स्वीकुर्वन्ति।

प्राचीनवैयाकरणाः शब्दे बोधकत्वमेव शब्दार्थयोः सम्बन्धं स्वीकुर्वन्ति, नव्यवैयाकरणास्तु पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावपरपर्याया, तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्, तदेव सम्बन्धः, उभयनिरूपिततादात्म्यवानुभय इत्यर्थपदयोर्व्यवहारात्, शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वादिति स्वीकुर्वन्ति दीपादिगतप्रकाशकत्वशक्तावपि आलोकविषयसम्बन्धे सत्येव नान्यथेति दृष्टत्वात्। तदुक्तं हरिणा-

**उपकारात् स यत्राऽस्ति धर्मस्तत्रानुगम्यते।**
**शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥**[1]

अर्थात् उपकारः - उपकार्योपकारकयोर्बोधशक्त्योरुपकारस्वभावः सम्बन्धो यत्रास्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः गुणानामपि द्रव्याश्रितत्वनियामक इति हेलाराजः।

सः सम्बन्धः पदे वाक्ये च। तदाह न्यायभाष्यकारः - **'समयज्ञानार्थं चेदं पदलक्षणाया**[2] **वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थलक्षणम्'** इति।

---

1. भर्तृहरि - वाक्यपदीयम्, तृतीयकाण्डम्, सम्बन्धसमुद्देशः, कारिका 5
2. वात्स्यायनभाष्य 2.1.55

अनेन पदेष्विव वाक्येष्वपीश्वरसमय इति स्पष्टमेवोक्तम्। तस्मादितरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यञ्च सम्बन्ध इति संघातार्थः। तदुक्तं पातञ्जलभाष्ये –

**'सङ्केतस्तु[1] पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः'** इति।

तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसमनियतम्। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः। न च शब्दार्थयोस्तादात्म्यस्वीकारे मधुशब्दोच्चारणे मुखे माधुर्यरसास्वादापत्तिः वह्निशब्दोच्चारणे मुखे दाहापत्तिरिति वाच्यम्, भेदाभेदस्योपपादितत्वात्। वस्तुतः प्राचीनाः नवीनाश्च वैयाकरणाः आन्तरस्फोटात्मकशब्दैः सह बौद्धार्थस्य क्रमशः बोधकतारूपं वाच्यवाचकभावापरपर्यायरूपञ्च तादात्म्यसम्बन्धं स्वीकुर्वन्तीति तदाशयः।

शब्दार्थयोः भेदस्योद्भुतविवक्षया अस्यार्थस्याऽयं वाचकः **'तस्य[2] वाचकः प्रणवः'** इत्यादौ षष्ठी। अभेदस्य तत्त्वविवक्षया तु प्रथमा, यथा **'ओमित्येकाक्षरं[3] ब्रह्म', 'वृद्धिरादैच्'[4]** इत्यादिषु। अत एवार्थे शब्दधर्मत्वव्यवहारः, अत्यन्तभेदेऽश्वपुरुषयोरिव तद्व्यवहाराभावात्। अयमध्यासः आदिव्यवहारकृदीश्वरकृत एव। एतच्च **'स्थितोऽस्य[5] वाचकस्य वाच्येन सह सम्बन्धः, सङ्केतस्तूक्तरूप ईश्वरस्य स्थितमेवार्थमभिनयति यथावस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते, अयमस्य पिता अयमस्य पुत्रः'** इत्यादिना पातञ्जलभाष्ये एव स्पष्टम्। उक्तञ्च श्रीहरिणा–

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा॥**
**सम्बन्धशब्दे सम्बन्धो योग्यतां प्रति योग्यता।**
**समयाद्योग्यता संविन्मातापित्रादियोगवत्॥[6]**
**सति प्रत्ययहेतुत्वं सम्बन्धमुपपद्यते।**
**शब्दस्यार्थे यतस्तत्र सम्बन्धोऽस्तीति गम्यते॥[7]**

इन्द्रियाणामिति। यथा इन्द्रियाणां चक्षुरादीनां स्वविषयेषु रूपादिषु अनादिर्योग्यतैव सम्बन्धः, तथा अर्थैः सह शब्दानामनादिर्योग्यतैव सम्बन्धः। स चान्तत आध्यासिकतादात्म्यरूपे सम्बन्ध एव पर्यवस्यति।

1. पतञ्जलि – योगसूत्रम्, नागेशभट्ट – परमलघुमञ्जूषा, शक्तिनिरूपणम्
2. पातञ्जलयोगदर्शनम्, समाधिपादः सू. 27
3. ब्रह्मविद्योपनिषद् 3
4. पाणिनि – अष्टाध्यायी 1.1.1
5. पातञ्जलयोगदर्शनस्य 1.27 भाष्यम्
6. भर्तृहरि – वाक्यपदीयम्, तृतीयकाण्डम्, कारिका 29-30
7. भर्तृहरि – वाक्यपदीयम्, तृतीयकाण्डम्, सम्बन्धसमुदेशः, कारिका 7

सम्बन्धशब्दे इति। सम्बन्धशब्दे प्रतिपाद्ये योग्यतारूपः सम्बन्ध एव। अत्रापि सम्बन्धशब्द तदर्थयोग्यतयोर्योग्यतैव सम्बन्धः। योग्यताशब्दस्यापि स्वार्थं योग्यताम्प्रति प्रतिपत्तिहेतुर्योग्यतैव सम्बन्ध इति।

अयम्भावः - अस्मद्दर्शने सम्बन्धशब्दः स्वार्थं योग्यतालक्षणं सम्बन्धं योग्यतयैव सम्बन्धेन प्रतिपादयति। एवं समवायशब्देऽपि स्वार्थप्रतिपादने स्वार्थेन सह अनादिसिद्धा योग्यतयैव सम्बन्ध इत्येवं सर्वेषु शब्देषु स्वार्थेन सह योग्यतारूपस्य सम्बन्धस्य व्यापकता बोध्या।

ननु - यदा शब्दार्थयोः शक्तिस्तदन्यो वा सम्बन्धस्तदा वृद्धव्यवहारपरम्परारूपस्य समयस्य सङ्केतापराख्यस्य शब्दशक्तिग्रहे उपयोगः, इदानीं यदा शब्दार्थयोर्योग्यतालक्षणः सम्बन्धस्तदा सङ्केतरूपस्य समयस्य कुत्रोपयोग इत्याशङ्क्याह समयादिति। समयात् प्रागुक्तलक्षणात् शक्तिसंविदिनाऽस्मद्दर्शने योग्यताज्ञानं भवति। सा च योग्यता शब्दार्थयोः सम्बन्धरूपाऽनादिसिद्धा न तु समयेन पूर्वोक्तलक्षणेन क्रियते इति। तत्र दृष्टान्तमाह - मातापुत्रादियोगवदिति। यथा 'अस्य पुत्रस्य इयं माता' इति मातापुत्रयोर्योगो जन्यजनकभावः समयेनानेन निश्चीयते एव, न तु क्रियते, वस्तुसिद्धस्यैव मातापुत्रादियोगस्य समयेन प्रतिपादनादिति।

सतीति। यतः सति शब्दार्थयोः सम्बन्धे शब्दस्यार्थे प्रत्ययहेतुत्वमुपपद्यते। अतस्तत्र नियतेऽर्थे नियतस्य शब्दस्य सम्बन्धोऽस्तीति ज्ञायते इति भावः। शब्दे नार्थस्याभिधाने सम्बन्धो हेतुः, अन्यथा सर्वं सर्वेण प्रत्याय्येतेत्युक्तं श्रीहरिणा-

**ज्ञानम्प्रयोक्तुर्बाह्योऽर्थः स्वरूपञ्च प्रतीयते।**
**शब्दैरुच्चारितैस्तेषां सम्बन्धः समवस्थितः॥**[1]

ज्ञानमिति प्रयोगेणाभिज्वलितैः स्वानुरूपध्वनिभिरभिव्यक्तैर्वा शब्दैः प्रयोक्तुः पुरुषस्य तत्तच्छब्दस्य तत्तदर्थे प्रयोगहेतुभूतं ज्ञानम्, तन्मूलकः 'अस्मात् पदादयमर्थो बोद्धव्य' इतीच्छारूपः प्रयोक्तुरभिप्रायश्च तत्तच्छब्दस्य स्वरूपञ्च प्रतीयते। अतस्तेषां शब्दार्थानां परस्परं सम्बन्धोऽनादिर्नित्यः, न तु पुरुषकृत इति तत्त्वम्। 'अयं सास्नादिमानर्थो गौः' इत्यर्थकात् 'अयं गौः' इत्येवं लोकानां व्यवहारात् शब्दार्थयोस्तादात्म्यसम्बन्धः स्पष्टं प्रतीयते। एतेन शब्दार्थयोरभेदे घटादिशब्दे मधुधारणाद्यापत्तिः, अर्थे वर्णमालाद्यनुभवापत्तिश्चेति निरस्तम्, भेदाभेदस्योपपादितत्वात्।

ईश्वरसङ्केतस्य शक्तिग्राहकत्वादेवोक्तम्- **'स्वर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः सङ्केतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केत इति'**।[2]

अर्थात् सोऽयं वृद्धव्यवहारः, साम्प्रतिकानां सङ्केतग्रहोपायः, सर्गादिभुवां महर्षिदेवतादीनां

---

1. भर्तृहरि - वाक्यपदीयम्, तृतीयकाण्डम्, कारिका 1
2. न्यायवाचस्पत्यम् 2.1.55

परमेश्वरानुग्रहाद्धर्मज्ञानवैराग्यैश्वर्यातिशयसम्पन्नानां परमेश्वरेण सुकर एव सङ्केतः कर्तुम्। तस्य व्यवहारपरम्परागतश्चास्मदादीनामपि सङ्केतग्रहो न सम्बन्धस्मृतिमपेक्षत इति भावः। तदुक्तम्–

**'सर्वे च शब्दाः सर्वार्थाभिधानसमर्थाः'।[1]**

अर्थात् सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्धः, ईश्वरसङ्केतस्तु प्रकाशकः। शब्दार्थसम्बन्धस्तु नित्य एवेति वैयाकरणाः। तदुक्तं श्रीहरिणा–

**नित्याः शब्दार्थसम्बन्धाः समाम्नाताः महर्षिभिः।**
**सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः।।[2]**

सर्वैरर्थैः सर्वशब्दानां योगि (ज्ञान) गम्य एव तेषां योगबलेनोभयरूपपराप्रत्यक्षात्, युक्तं चैतत् एकस्यैव शब्दब्रह्मस्वरूपस्य स्फोटस्य सर्वशब्दतदर्थोभयोपादानत्वेनोभयरूपतया उभयोरपि तत्कार्ययोरुभयरूपत्वात्। तदुक्तम्–

**क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्।**
**प्रकृते बिन्दुरूपिण्याः शब्दब्रह्माभवत् पुरा।।**

नित्यत्वञ्च यावत्सृष्टिस्थितत्वेन व्यवहारनित्यत्वेन च बोध्यम्। तदुक्तम्–

**सूक्ष्मामर्थेनाप्रवभिक्ततत्त्वामेकां वाचमभिष्यन्दमानम्।**
**तामन्ये बिन्दुरन्यामिव च नानारूपात्मनि सन्निविष्टाम्।।[3]**

तथा च महाभारते–

**प्राणापानान्तरे देवी वाग् वै नित्यं स्म तिष्ठति।**
**स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा।।**

**वैखरी वाक् प्रयोक्तृणां प्राणवृत्तिनिबन्धना।**
**केवलं बुद्ध्युपादानक्रमरूपानुपातिनी।।**

**प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्तते।**
**अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।।**
**स्वरूपज्योतिरेवान्तः परा वागनपायिनी।।**

हरिवंशपुराणेऽपि – 'अक्षराणामकरास्त्वं स्फोटस्त्वं वर्णसंश्रयः' इति 'योग्यतालक्षणः सम्बन्धः' इत्यादेः कैयटस्य च कारणतावच्छेदकधर्मरूपः सम्बन्ध इत्यर्थः। 'तत्त्वमसि' इत्यादिवाक्यस्याखण्डार्थेन शुद्धेनापि ब्रह्मणाऽध्यासिकं तादात्म्यम्।

1. योगवाचस्पत्यम्
2. भर्तृहरि – वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिका 23
3. छान्दोग्योपनिषद् 6.3.2

अनादि अनन्तमर्थात् अविनाशि शब्दतत्वं शब्दब्रह्म एव अर्थरूपेण विवर्तते – अताःत्विकान्यथाभावापन्नम्भवतीत्याह हरिः –

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[1]

अर्थात् तस्मादेव शब्दात् समस्तस्य जडचेतनात्मकस्य जगतः सृष्टिर्भवति। शब्देष्वाश्रिता शक्तिरेव विश्वस्य निबन्धनी उत्पादिका वास्तीत्याह हरिः –

**शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।**[2]

संसारोऽयं शब्दब्रह्मणः परिणामो विवर्तश्चेत्याह हरिः –

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥**[3]

मनुनाऽप्युक्तम्–

**वेदशब्देभ्य एवाऽऽदौ पृथक्संस्थाश्च निर्ममे।**[4]

अर्थात् समस्तोऽयं प्रपञ्चात्मकः संसारः शब्दस्यैव परिणामः छन्दोभ्यः – वेदशब्देभ्य एव विश्वस्य समेषां शब्दमयानां पदार्थानामुत्पत्तिर्जातेति वेदविदः। एवं सकलनामरूपात्मकः प्रपञ्चात्मकश्च संसारः शब्दस्यैव परिणामो विवर्तश्चेति सिद्ध्यति।

एवं विचारणायां सिद्ध्यति घटस्योपादानं मृत्तिका, पटस्य सूत्रं तथैव विश्वस्य सर्वेषामपि पदानामुपादानं शब्दा एवेति। यथा मृत्तिकाघटयोः पटसूत्रयोर्वा तादात्म्सम्बन्धः उपादानोपादेयसम्बन्धो वा सिद्ध्यति, तथैव शब्दार्थयोस्तादात्म्यसम्बन्धः सिद्ध्यति। तादात्म्यञ्च भेदाभेदघटितत्वम्, नियामकश्चास्य कार्यकारणभावो विकृतिभावो वा। शब्दश्चात्र प्रकृतिः, अर्थश्चाऽत्र विकृतिः कार्यं वेति। अयं कार्यकारणभावः प्रकृतिविकृतिभावो वा सम्बन्धान्तरमेव। मीमांसकाः शब्दार्थयोः 'शक्ति' नामानं सम्बन्धान्तरं स्वीकुर्वन्ति, तस्य बोधकत्वमेव तात्पर्यम्। प्राचीनाः वैयाकरणाः शब्दार्थयोः बोधकत्वसम्बन्धं, नवीनाश्च वैयाकरणाः वाच्यवाचकभावापरपर्यायं सम्बन्धं स्वीकुर्वन्ति। कुमारिलभट्टमते शब्दार्थयोः प्रत्याय्यप्रत्यायकभावसम्बन्धः स्वीक्रियत इति शास्त्रदीपिकायां स्पष्टम्। शब्दभेदेऽपि सर्वेषां दार्शनिकानाम्मते वाच्यवाचकभावसम्बन्ध एव स्वीक्रियते इति तत्त्वम्। शब्दो बोधकः प्रत्यायको वा, अर्थश्च बोध्यः प्रत्याय्यो वेति। अयमेव वाच्यवाचकभावोऽप्युच्यते। अर्थो वाच्यः, शब्दो वाचकः। शब्दभेदेऽपि सर्वेषां

1. भर्तृहरि – वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिका 1
2. भर्तृहरि – वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिका 118
3. भर्तृहरि – वाक्यपदीयम्, ब्रह्मकाण्डम्, कारिका 120
4. मनु – मनुस्मृतिः 121

दार्शनिकानां तात्पर्यमेकवेति सिद्ध्यति। बाह्यशब्दवदाभ्यन्तरशब्दाः अपि भवन्ति, ये 'बौद्ध'– पदेनाप्युच्यन्ते। एवमाभ्यन्तराः बौद्धा वा अर्था अपि भवन्ति। बौद्धार्थो द्विविधः सदसत् भेदात्। बुद्धिगतसत्तात्वे सति बाह्यसत्ताविधं सद्बौद्धार्थत्वम्। यथा घटपटादयः। अत्यन्तमसत्, यथा –शशशृङ्गखपुष्पेत्यादयः। अनिर्वचनीयं सत्, यथा – स्वप्ने भासमानाः पदार्थाः। उभयोरपि बौद्धादार्थयोस्तादात्म्यसम्बन्ध एव, उभयोरुपादानस्य बुद्धित्वात्। एवमुपादानोपादेयत्वात् प्रकृतिविकृतिभावाद्वा बौद्धपदपदार्थयो– स्तादात्म्यसम्बन्धः सिद्ध्यति।

एवं वैदिकपदपदार्थयोरुपादानोपादेयत्वभावः सिद्ध्यति। अतो गङ्गापदे तीरस्य बोधानुकूला शक्तिर्न स्वीक्रियते, गङ्गापदस्य भगीरथरथखातावच्छिन्नजलप्रवाह एव शक्तत्वात्, न तीरे, तीरस्य बोधस्तु लक्षणया भवति। गङ्गापदमत्र लाक्षणिकमेव भवति। आधुनिकानां भाषावैज्ञानिकानाम्मते शब्दार्थसम्बन्धोऽनित्यः कालान्तरेऽन्यस्मिन्नर्थेऽपि शब्दानां प्रयोगदर्शनादिति न समीचीनम्, द्वितीयार्थस्य लाक्षणिकत्वात्। द्वितीयार्थो गौण एव भवति, न शक्यार्थः। शक्यार्थेनैव शब्दस्य तादात्म्यसम्बन्धो नित्य इति वैयाकरणसिद्धान्तः। 'अयं गौः, अयं घट' इत्यादिषु शब्दार्थयोः समानाधिकरणेनैव निर्देशः सर्वत्रोपलभ्यते। अतः शब्दार्थयोस्तादात्म्यसम्बन्धः सिद्ध एव, वाच्यवाचकभावरूपः शब्दार्थसम्बन्धः शक्तित्वेन स्वीक्रियते चेत् सोऽपि तादात्म्यमूलक एव **'तस्मात्पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावापरपर्याया। तद्ग्राहकं चेतरेताराध्यासमूलकं तादात्म्यम्'**।[1]

इति लघुमञ्जूषायामुक्तत्वात्। वस्तुतस्तु वाच्यवाचकभावरूपो वैयाकरणसम्मतः सम्बन्ध एव नित्यः शब्दार्थसम्बन्धः, अन्येषां दार्शनिकानां बोधकत्व–बोधजनकत्व–प्रत्यायकत्व–प्रत्याय्य–प्रत्यायकत्व–योग्यताप्रभृतिसम्बन्धानां वाच्यवाचकभावसम्बन्ध एव तात्पर्यादित्यलमतिविस्तरेण।

---

1. नागेशभट्ट – वैयाकरणसिद्धान्तलघुमञ्जूषा, शक्तिनिरूपणम्, पृ. 23

# भारतीय दर्शन में भक्ति एवं प्रपत्तिविमर्श

प्रो.हरेराम त्रिपाठी

भाति ज्ञाने रतः आसक्तः इस व्युत्पत्ति के अनुसार अनादिकाल से तत्त्व ज्ञानार्जन में संलग्न राष्ट्र को भारतवर्ष कहा जाता है। **"आत्मा वारे द्रष्टव्यः[1] श्रोतव्यः मन्तव्यः निदिध्यासितव्यः॥"** इस उपनिषद्वाक्यानुसार आत्मसाक्षात्कार के लिए यह देश अनादि काल से संलग्न रहा है इसलिए इस देश का नाम भारतवर्ष पड़ा कुछ विद्वानों का मत है कि ब्रह्मज्ञानी या अपने कर्तव्य ज्ञान एवं परिपालन ज्ञान से परिपूर्ण दुष्यन्त महाराज के सम्राट पुत्र भारत के नाम से इस देश का नाम भारतवर्ष पड़ा। **"भारते[2] भवः वा जातः भारतीयः"** भारतवर्ष में होने वाले को भारतीय कहते हैं। जिस दर्शन का विकास भारतवर्ष में हुआ उसे भारतीय दर्शन कहते हैं **"दृश्यते आत्मसाक्षात्कारः[3] क्रियते वा तत्त्वसाक्षात्कारः क्रियते अनेन इति दर्शनम्"** इस व्युत्पत्ति के अनुसार आत्मा का ज्ञान जिसके द्वारा होता है या तत्त्वों का सम्यक् ज्ञान जिससे होता है उसे दर्शन कहते हैं। वैदिक एवं अवैदिक या नास्तिक[4] एवं आस्तिक भेद से भारतीयदर्शन के दो भेद स्वीकार किये जाते हैं। सभी दर्शनों में भक्ति के स्वरूप का पर्यालोचन करना है। इसके पूर्व भक्ति के सामान्य स्वरूप का पर्यालोचन करना आवश्यक है। **"भज्यते[5] इति भक्तिः"** भक्ति के अनेक अर्थ शब्दकल्पद्रुम में किये गये हैं। विभाग और सेवा मेदनीकार[6] के अनुसार भक्ति के अर्थ कहे गये हैं। गौड़वृत्ति भी भक्ति का तात्पर्य है। भङ्गी भी भक्ति का अर्थ होता है। अनुराग विशेष को भी भक्ति कहते हैं। **"पूज्येष्वनुरागो भक्तिरित्युपदेशः"[7]** अर्थात् पूज्यजनों के प्रति अनुराग को भक्ति कहा जाता है। उपासना, परमेश्वर विषयक परमप्रेम एवं उपास्य के आकार से आकारित चित्तवृत्ति को भक्ति कहते है। ब्रह्मा ने देवर्षि नारद को श्रीमद्भागवत का संक्षेप करने के लिए तथा भक्ति के स्वरूप को प्रदर्शित करने के लिए लेखन हेतु उपेदश दिया। अतएव श्रीमद्भागवत महापुराण में कहा गया है कि–

---

1. उपनिषद् वाक्य।
2. लघुसिद्धान्तकौमुदी तद्धितप्रकरणम्।
3. आत्मसाक्षात्कारसाधनत्वं वा तत्त्वसाक्षात्कारसाधनत्वं दर्शनस्य लक्षणम्।
4. न अस्ति परलोके मतिर्यस्य स नास्तिकः, अस्ति परलोके मतिर्यस्य स आस्तिकः।
5. शब्दकल्पद्रुम भाग-3, पृष्ठ-463, भज्+क्तिन्।
6. तदेव, पृष्ठ-463
7. तदेव।

